वर्ष ५
संख्या ३

Vol. 5
Number 3





ॐ ओरम् ॐ

काश्मीर प्रदेशस्थ श्रीनगरस्थायाः

# संस्कृत साहित्य परिषदः

त्रैमासिकं पत्रम्

# श्रीः

Quarterly Journal of the

# SANSKRIT SAHITYA PARISHAD

SRINAGAR, KASHMIR.

श्रीनगर पौष/माघ १९९३

*Srinagar January 1937*

वार्षिकं मूल्यम् २।)

प्राप्ति स्थानम्—पं० कुलभूषणः श्री कार्यालय, सुन्वारबाग़ श्रीनगर कश्मीर

# विषय सूची



सर्वे लेखा लेखकमहानुभावानां भाषामतानुसारेणैव प्रकाश्यन्ते । तेषामुत्तरदायिनो लेखका एव न च सम्पादकाः ।



## सम्पादक समितिः




पं० भीमसेन विद्यालङ्कार द्वारा, नवयुग प्रिण्टिंग प्रैस, १७ मोहनलाल रोड लाहौर में मुद्रित ।




वर्ष ८ संख्या ३ | पौष, माघ संवत् १९९३ वि० जनवरी १९३७ ईसवी | पूर्ण संख्या १९

# सन्ध्याभाष्ये

## स्नानविधिः

पूर्वतोऽनुवर्तते

ले० पं० गोविन्द राजानकः एम० ए० एम० ओ० एल० एल० टी० शास्त्री प्रभाकरः

अथ पाद प्रक्षालनविषये तावत् हारीतशातातपौ :—

"अकृत्वा पादशौचं तु तिष्ठन् मुक्तशिरो द्विजः।

विना यज्ञोपवीतेन ह्याचान्तोऽप्यशुचिर्भवेत् ॥"

तत्र वामपाद प्रक्षालनमन्त्रभाष्यं निरूप्य दक्षिणपाद प्रक्षालन मन्त्रमीश्वरीयान्तर्यामि जगदाधारकारण प्रतिपादनपूर्वमवतार्यते—

नमः कमलनाभाय नमस्ते जलशायिने।

नमस्ते केशवानन्त वासुदेव नमोऽस्तुते ॥

सामान्यार्थस्तावत्—हे वासुदेव वसति देवता स्वरूपेण सर्वात्मसु वसन्ति सर्वाणि भूतानियस्मिन्—इति वा—हे अन्तर्यामिन् केशव अनन्त अपरिच्छिन्न भगवन् ते तुभ्यं नमस्ते कीदृशाय कमलनाभाय कमलं नाभौ यस्य तस्मै तथा जलशायिने क्षीरोदशायिने ॥

भावार्थः—हे केशव को ब्रह्मा ईशोरुद्रः तत्स्वरूप अनन्त

रूपादिभिरपरिच्छिन्नाय तुभ्यं नमस्ते हे वासुदेव सर्वान्तर्यामिन् अथवा के जले प्रलयार्णवे शेतुं शीलं यस्य सः केशव अथवा के परमानन्द स्वरूपे शेते यः स केशः सर्वदैव परमानन्द प्रतिष्ठितत्वादीश्वरस्य तथाच श्रुतिः "आनन्दं ब्रह्मणो विद्वान्" इति—'एतस्यैवानन्दस्यान्ये मात्रामुपजीवन्ति'—इति श्रुत्या वा पिपीलिकादि ब्रह्माण्डान्तेषु तारतम्येन स्थितेन स्वानन्दांशेन गच्छति तिष्ठति—इति वः यद्वा 'तत्सृष्टा तदेवानु प्राविशदिति" श्रुतिदृशा जगत्स्रष्टा तत्रैवाभिप्रविशति—इति वः केशश्चासौ वश्चेति-केशव तथा-अविद्यमानो देशतः कालतश्चान्तो यस्य सोऽनन्तः तस्यामन्त्रणं हे अनन्त ते तुभ्यं नमाऽस्तु कमलनाभाय कमलं नाभौ यस्य तस्मै यद्वा कमलं जलं तदाधारभूताय कमलं ब्रह्मासनं नाभौ वा यस्य तस्मै जलशायिने जले रसात्मके स्वात्मनि शायिने आनन्दरूपायेत्यर्थः "आनन्दादेव खल्विमानि भूतानि जायन्त" इतिश्रुतेः यद्वा जडे (डलयोरैक्येन) पंचभूतात्मके जगति शायिने व्यापकायेत्यर्थः तदुक्तं भागवते—'भूतैर्महद्भिर्यइमा-पुरो विभुर्निर्मायशेते यदमूषु पुरुष' इति ॥

अथ कथमेव पूर्वं करप्रक्षालन पुरः सरं पादशौचं तच्च भगवन्नमस्कृतिस्मरणक्रमेवेत्याशंकायां तत्रभवान् देवल आह—

"सूर्ये तु शिखरं प्राप्ते पादशौच समन्वितः।
बहिः सन्ध्यामुपासीत दर्भपाणिः समाहितः॥"

इत्यनेन करपादयोः कर्मेन्द्रिय प्राधान्यात्तेषां प्रक्षालनपूर्वकं शोधनं पूर्वमेव विधेयम्। तथा च करपाद प्रक्षालनेनान्तर्नाडीसम्बन्ध जनिता शान्तिर्मनसो विधीयते येन 'देवो भूत्वा देवं यजेत' इत्युक्त दिशा सन्ध्यायां सम्यक् समाधानं सावहितत्वं च भवति। वामपाद-प्रक्षालनं त्वन्तर्नाडिका सम्बन्धप्राधान्येन पूर्वमेव भवति॥

अथ रोगादिनासामर्थ्येन वा स्नानानर्हत्वात्कालादिविगत्वाद्वा-किं कार्यमिति तत्रोच्यते—

"मुखमाद्यं शरीरस्य मुखं सकलमुच्यते।
मुखस्नानेन राजेन्द्र गंगास्नानफलं लभेत।"

इति स्मृत्युक्तेर्मुखस्य सकलाङ्गेषु मुख्यत्वात्क्षालनमात्रेणैव स्नानफलदत्वाच्च तत्प्रक्षालनार्थं तीर्थानि प्रार्थयते—

गंगा प्रयागगयनैमिष पुष्करादितीर्थानि यानि भुवि सन्ति हरिप्रसादात्। आयान्तु तानि करपद्मपुटे मदीये प्रक्षालयन्तु वदनस्य निशा कलङ्कम्।

स्पष्टार्थ :—

अधिकारिभिः परमपदप्राप्तये किं कर्मानुष्ठेयामित्याकांक्षायां सकलाधिकारिणां सुखोपायसाध्यपरमानन्द प्राप्तिमेतद्व्यतिरेकेनानवगच्छंस्तीर्थस्नानमेव सकलविधि मूलभूतं समस्तदोष निर्मूलनदक्षं प्रथमं विधेयम्। ननु गंगादीनां कुत्रचिद्दूरस्थत्वात् कुत्रचिच्च तीर्थाभावात् तीर्थे स्नेयमिति विधिर्निरर्थक इति चेत्तत्राह—यजुषा—

तीर्थे स्नेयं तीर्थमेव समानानाँ भवति।

सामान्यार्थः—समानानां स्नानपानादियोग्यानां तीर्थे तोयाशये स्नेयं स्नानं विधेयम् उत्तममध्यमाधमादिव्यवस्थया स्थितानां तोयाशयानां मन्त्रसामर्थ्यात्तीर्थसंज्ञा भवति—इत्यर्थः तदुक्तमग्नि पुराणे— 'नदीनां ब्राह्मणं तोयं तडाके क्षत्रियोदकम्।
वैश्यं कूपगतं तोयं गृहभाण्डेषु शूद्रकम्॥
तथा—कर्मारम्भेषु सर्वेषु तीर्थे स्नानं समाचरेत्।
अतिकालाद्यसामर्थ्याद्यथा सम्भवमेव वा॥'—इति

संमानिता तोयाशया हि तीर्थमेव भवन्ति—अथोत्तरा—

मा नः शंसो अररुषो धूर्तिः प्रणङ् मर्त्यस्य रक्षाणो ब्रह्मणस्पते।

हे ब्रह्मणस्पते वेदस्य पालक नारायण! नोऽस्मान् रक्ष पालय। नोऽस्मान् शंसः शंसनं शत्रुकृतमनिष्टचिन्तनं धूर्तिः हिंसा वा मा प्रणक् मा व्याप्नोतु नाशयतु वेत्यर्थः कीदृशस्य मर्त्यस्य मरण धर्माणः शत्रोररुषः कदाचिदपि हविर्दानादिकमकृतवतः 'केवलाघो भवति केवलादी' इति केवलं पापिनोऽन्यभ्योऽपि पापं चिन्तयतः॥

भावार्थस्तु—

'निधानागमयोस्तीर्थमृषिजुष्टे जले गुराविति" कोशः। तीर्थ शब्देन वेदब्रह्मणि स्नेयं श्रवणादिनावगाहो विधेयः तथाच श्रुतिः "स्वाध्यायोऽध्येतव्यः" इति। अन्यच्च शब्दब्रह्मणि वा तथाच—

"साक्षात् त्वमेव वा शास्त्रं त्वदीयैव हि सा मतिः।
शब्दद्वारेण संक्रस्य संस्कारोऽस्त्यधिकारिणः॥ इति

अत्र वृद्धानुष्ठान प्रदर्शनेन सन्देहाविषयतामाह—"तीर्थमेव समानानां भवति"—इति सह मानेन वर्तन्ते येषां तेषां पूज्यानां ज्ञानिनां समानानां वा सर्वत्र ब्रह्मभावेन समतया स्थितानां अविषम दृष्टीनां तीर्थमेव भवति। निष्किञ्चनानामेव हि तेषामवज्ञात सकल विषय सुखानां शास्त्रं विना न किंचिदुपादेयमिति—इत्थं मनसि तीर्थोपासनमेवानुष्ठीयतया दृढी कृत्य तत्सिद्धयेऽपि तदवगन्तव्यं ब्रह्मैव शरणं प्रतिपद्यते—हे ब्रह्मणस्पते! ब्रह्मणो वेदस्य पालक नोऽस्माकं मर्त्यस्य मरणधर्मस्य देहस्य शंस्योः गुर्वादिसेवाद्वारेण स्वस्मिन् देहेऽनात्मनि आत्मभावदेहत्वाभावेन स्वकीय सहजातपरमात्म प्राप्ति निमित्तकस्य सतः तत एव (अरिरिषो इति पाठे) जन्म मरण पीडाभावादहिंसकस्य च या धूर्तिः धूः अन्यचोद्यत्वात् तत्रैव च तात्पर्याद्वा समानं भवति वसतीत्यर्थः तत्र स्नेयमिति साक्षाद्ब्रह्मणि पराणामुपनिषदादीनामवगाहनस्य साक्षाद्ब्रह्मप्राप्त्युपायसूचितं ब्रह्मार्थं च सदैवार्थरूपतया निवसति। यद्वा मयि तस्य स्वात्मरूपतया बहिरन्वेषणीयत्वात् तन्मनसि तेनैव विचार्यत्वात् या धूर्तिः मलादिकं सा मा प्रणक् प्रनाशयतु दुःखबाहुल्यादिकं माभवत्वेत्यर्थः किन्तु नः आ समन्तात् कामादिरिपुभ्यो रक्ष पालय येनायं मानुषो देहः परम पुरुषार्थसाधनो भवेदिति। यद्वा तीर्थे अन्तर्यामित्वेन सकल जगद्गुरौ स्वोपासकादिमलक्षालने तीर्थभूते ब्रह्मण्येव स्वयं निदिध्यासनेन निमज्जितव्यम् तस्मादभिन्नो भूयाज्ज्ञानाद्विरुद्धार्यं देहादि मलं क्षालयितव्यमेवेतिदिक्। प्रसिद्धतीर्थस्य ब्रह्मतया मानितस्य तीर्थमेव समानं स्वमानमिति पाठे समानं भवति। ननु कुत्र तिष्ठति तत्र स्नानं विधातव्यमित्याकांक्षायामाह तीर्थमेवेति शास्त्रार्थं तीर्थमेव शिवे ब्रह्मणि तत एव निःसृत इति।

---

# सम्पादकीयम्

## महाराज ट्रावन्कोरस्य हिन्दूजातौ उपकारो महान्—

कस्य न हिन्दू जातेः सहृदयस्य बुद्धियुक्तस्य विचारशीलस्य मनसि श्री महाराजानां ट्रावन्कोर राज्याधिकारिणां राज्य-मन्दिराणि सर्वहिंदू नामर्थे देवतादर्शनार्थं उद्घाटनेन महानानन्दो न सञ्जायेत। ट्रावन्कोर राज्यमन्दिरेषु नासीत् कदापि पददलिता नां हिंदूजातेः स्त्री पुरुषाणां प्रवेशो न चाभिमानिनो ब्राह्मणाः राज्य पथेषु तानस्पृश्यान् चलनेऽप्याज्ञां ददतिस्म का कथा तैस्सह स्पर्शादि करणे। दुर्व्यवहारस्यास्य कतिपय शतवर्षेभ्यो घोरः परिणामोऽभूत। ट्रावन्कोर राज्ये दक्षिण भारते यादृशः प्रचारः खृस्ट धर्मस्याभूत् तादृशो नास्ति क्वचिदन्यत्र कस्मिन्चिदपि भारतवर्षस्य खण्डे। जानन्ति हिंदूधर्मस्य "नितान्तं रक्षकाः हिंदूसभ्यतायाश्च केवलं दृढ पोषका—इति—स्वात्मानं मन्यमाना हठधर्मेऽऽरूढाः केचन केवलं स्वात्मानमेव सनातनधर्मीयं इति मन्यमाना यत् तेषां प्रभावे कियती संख्या हिंदुनां खृस्ट धर्म स्वीकृतवती? ३३ प्रतिशतं कथयन्ति केचन त्वन्ये ५० प्रतिशत-तम् ट्रावन्कोर राज्ये। ईसामतानुयायिभिरिदमेव क्षेत्रं ईसामत प्रचारार्थं भारतवर्षे सर्वक्षेत्रेभ्यो उत्तमतममितिज्ञात्वा दृढ़प्रचारेण अर्द्धसंख्या हिंदूनां स्वधर्मे परिवर्तिता। भगवतः श्रीकृष्णस्य श्रीरामनामस्य जपकरणे तत्पराः स्त्री पुरुषा बालाश्च, गोब्राह्मण वेदशास्त्ररक्षका मनुष्या शास्त्रनिंदका गोब्राह्मण भक्षका सञ्जाताः न च केवलं शतशः सहस्रशो वा। परञ्च लक्षशः। न हिऽहंकारिणो बलवंतोऽभिमानिनो वा राज्यकीयाः साधारणा वा पुरुषास्तत्र हेतुः किन्तु विदुषां वेदशास्त्रज्ञानां पुरुषाणां मन्दिराध्यक्षाणां महापण्डितानां पुरोहितानाञ्च हठेन सर्वमिदं तत्राभूत्। के मन्दिरेषु पूजार्थं गच्छेयुः यदि मन्दिरेऽऽ गन्तृणां संख्या एव न स्यात्?

 श्रीः

शतशः धन्यवादार्हो ऽऽशीर्वादार्हश्च महाराजा ट्रावन्कोर नरेशो येन युवावस्थायामेव सर्वमिदमनर्थं ज्ञात्वा मानसीपीड़ामनुभूय तादृशी घोषणा कृता यया हिंदूजातेः व्रणेषु संजीविनी ओषधिः पातितः। न केवलं सर्वभारतवर्षस्य परन्तु सर्वसंसारस्याशीर्वादाः श्रीमहाराजेन प्राप्ताः।

## जम्मूकश्मीरनरेश महाराज हरिसिंहस्य बुद्धिचातुर्यं प्रजास्नेहश्च—

अस्माकं जम्मूकाश्मीर राज्यस्य त्विदानीं कथैव न संसारे लोकाः जानन्ति। ईदृशमेव महत् कर्म श्री कश्मीर नरेशेण ३, ४ वर्ष पूर्वं कृतमासीत्। येन महाराज हरिसिंहस्य बुद्धिमत्ता लौकिकव्यवहार नैपुण्यं च सम्यक् दरिदृश्येत। जम्मू कश्मीरप्रदेशेऽपि समस्या स्पृष्यास्पृष्य विषये कठिनाविद्यते। काश्मीरे तु न सन्ति केचन बहुसंख्याका अस्पृश्याः परं जम्मू प्रदेशे कतिपय लक्षसंख्याका मेघ डूम चमार बटवाल जातयः कृषीवला अथवा चर्मकारादयोभृतिवृत्तिसुलग्नाः। तेभ्यः कतिपये सहस्राः खृस्टमहमद्दीयधर्मं स्वीकृत्य हिंदूजाते वज्रप्रहारात् निवृत्ताः। परं बहू संख्येदानीमपि हिंदूधर्ममेव स्वात्मशान्त्यै प्रशंसति। यद्यपि लक्षपरिमितं स्त्री पुरुषाणां आर्यसमाजस्य संस्थायां स्यालकोट ज़िलायां मेघोद्धारसभाभिधानायां प्रविष्टाः तथापि तेषामस्पृश्यता क्रियात्मिकरूपेण न गता। न च ते देवता मन्दिरेषु पूजा विधानेतु क प्रवेशेऽपि क्षमा न च हिंदूमुसलमानानां जलकूपवापीभ्यः जलपानेप्रभवा यतस्ते हिंदूनाम धारिणः। न च तेषां बालका राज्यकीय पाठशालासु पठन पाठन कार्यं करणे शक्ताः। परन्तु यस्मिन काले ते महमदीया कृस्टाना वा जातास्तस्मिन्नेव क्षणे सर्वान् तान् व्यापारान् सम्यक् विधाने बलवन्तः। तेषां बाला राज्यकीय पाठशालायामपि प्रवेशार्हाः स्त्रियः कूपेभ्यः जलोत्कर्षणेऽपि क्षमा सञ्जाताः। दूरदर्शिना बुद्धिमता श्रीहरिसिंह राज्ञा स्वपितृव्यात् राज्यसिंहासन ग्रहणकालात् किञ्चिद्दिनानन्तरं

घोषणा कृता निर्देशपत्र द्वारा यत् सर्व देवतायतनानि राज्यकीय-पाठशाला राजकीयकूपपथजलनालिकेत्यादयोऽस्पृश्येभ्योऽपि द्विजातिवत प्राप्या न च कश्चिद् भेदः कार्यो राज्याधिकारिभिः राज्यस्थानेषु। निदेशं तमनुकृत्य राज्य मन्त्री विशेषतया श्रीयुत ठाकुर कर्तारसिंहो धनामात्यः श्रीनगरीय राजकीय श्री रघुनाथ मन्दिरे बृहदधिवेशनं रचयामास। यत्र हिंदूराज्याधिकारिणो महाराजाज्ञया निमन्त्र्य डूमचमारमेघादयः देव दर्शनाय मन्दिरे प्रवेशिताः। चरणामृतादिकं गृहीतवन्तश्च। राजकीय पाठशालासु, चमार मेघ प्रभृतयो बालाश्च प्रवेशिताः। मनुष्य स्वभाव एव यत् तां घटनां विस्मृत्य सर्वत्र भारते महाराजं ट्रावनकोर नरेशं कुरीति सुधारेऽस्मिन् प्रथमं स्थानं ददति समाचार पत्र सम्पादकाः। सत्यं त्विदं यत् कश्मीर नरेशैवाऽग्रसरो विद्यते प्रजा दुःख निवारण हिन्दू धर्मरक्षण कार्येऽस्मिन्। न च केवलं महाराजेन साधारणोत्साहो निर्भीकता च दर्शिता तस्मिन् काले। परं स्मृति पथे स्यात् लोकानां यत् परं विद्वान् महाराजस्य परं स्नेहभाजनं राजगुरू म० म० श्रीदेवराजस्य महान् मत भेद दृष्ट आसीत महाराजेन सह। यस्य फलमतीव दुःखदायकं यत् महा पण्डितेन तेन रुष्टेन सर्वराज्याधिकारेभ्यो देवतायतनानामध्यक्ष पदेभ्यश्च त्यागपत्रमपि दत्तम्। दुःखितेनापि श्री हरिसिंहेन त्याग पत्रमेव स्वीकृतं न च प्रजाहितं त्यक्तम्। महाराजाज्ञामनुसृत्य निज मन्दिरेष्वपि लोकैरस्पृश्याः प्रवेशिताः। श्रीनगरीय श्री सनातनधर्म प्रताप भवन सभाया अध्यक्षत्वे श्रीनगर्यां स्वर्गीय दीवान अमरनाथस्यापि मन्दिरेऽमीराकदल प्रदेशे बालमीकीयाः प्रवेशिताः। अनेक स्त्रीपुरुषास्तेभ्यः 'नैवेदमपि' गृहीतवन्तः शतशः सहस्रशः स्त्रीपुरुषा उत्सवमेनं दर्शनाय गतवन्तश्च। उभौ च महाराज कश्मीर ट्रावन्कोर नरेशौ हिन्दूजातेः प्राणरक्षकौ कोटिशो धन्यवादार्हौ।

## 'संस्कृतं' पत्रस्य राष्ट्रभाषाङ्कः—

प्रियः पाठकानां विदितचरमेव यत् अयोध्या पुरीतः श्रीविदुषा कालीप्रसाद त्रिपाठिना सम्पादक संचालकत्वेन साप्ताहिकं 'संस्कृतमि' ति नामधेयं पत्रं देववाण्यां प्रकाश्यते। तस्य राष्ट्रभाषाङ्कः सम्पादक महोदयैर्महता प्रयासेनआश्विनःविजयदशमीमधिकृत्य मार्गशीर्षं मासे १९९३ विक्रमाब्दे प्रकाशितोऽस्ति। यद्यपि विचारशीलस्य महानुभावस्य श्रीमतः पं० कालीप्रसादस्य लेखा दृढं मध्यकालीन भारतवर्ती विचार पोषकाः पौराणिक सनातन मतानुसारिणो प्राचीन वैदिक प्रणालीतो विपरीता अस्मदविचारेभ्यो भिन्ना प्रायो दृश्यन्ते तथाप्यस्माकमुद्देश्यपोषका भवन्ति। किञ्चास्माकमुद्देश्यः जानन्त्येव प्रियः पाठकाः। संस्कृत साहित्य परिषदःश्रीनगरस्य प्रियश्च नियमानुसारेण "संस्कृत भाषायंसभ्यतारक्षार्थं प्रचार" एवास्त्यास्माकमुदेश्यः। तस्मिन् कार्ये तु वयं भ्रातरः परं आर्यसमाजीनां ब्रह्मसमाजीनां जैन बौद्धशिक्षमतानुयायिनाँ हिन्दूनां सुधारकाणां विचारान् कर्मणश्च सर्वदा खण्डने कठोर शब्देषु तेषां संस्थानां वर्णने न वयं तत्पराः परञ्च हिंदूजातेः कुरीतीनां सुदृढं सुधारमुद्दारम वेछामः। हिन्दूनां संगठने च बद्धपरिकराः। आशासेऽस्माकं सहयोगी 'संस्कृतमपि' स्वशक्तया यथा संस्कृतभाषोद्वाराय च संचालयति तथैव हिन्दूजातेः शिथिलखण्डानां संगठनायापि प्रयुज्येत।

नितान्त श्लाघनीयोऽयमुत्साहो सहयोगी संस्कृतपत्रस्य यस्य शीर्षके "अस्यामेव शताब्द्यां संस्कृतं राष्ट्रभाषा भवेद्यमेव संस्कृतस्योद्देशः" लिखितं विद्यते। कस्य सहृदयस्य मनसि सहर्षं साधुवादं न जनयेत् यः पठति श्लोकोऽयं प्रथम एव पृष्टे संस्कृतस्य—

यावद् भारतवर्षं स्याद् यावद् विन्ध्यहिमाचलौ।
यावद् गङ्गा च गोदा च तावदेव हि संस्कृतम्॥

बहवः शोभनाः लेखाः "भारतीयरमणीनां संस्कृतेऽनुरागः, संस्कृत भाषा कथं राष्ट्रभाषा भवेत्, गैर्वाण्या वाण्या विषये विविध विचारधारा, संस्कृतभाषायाः सृष्ट्यारम्भादुत्पत्ति" इत्यादयो विद्यन्ते। संपादकसंचालक महाशयानां महान् प्रशंसनीयोद्योगोऽयम्।

## संस्कृत भाषाया राष्ट्रभाषात्व निर्माणोपायः—

विचार शीलस्य ब्रह्मचारी श्री भगवद्दाचार्यस्य, तत्वदर्शि मासिक पत्रस्य सम्पादकस्य राष्ट्रभाषाङ्के संस्कृतपत्रस्य शोभनो लेखोऽत्र दरीदृश्यते। संस्कृतं कथं राष्ट्रभाषा भवितुमर्हति इदं विचारं पुरस्कृत्य महाशयोऽयं लिखति सुलेखेऽस्मिन्। तथाहि—

अपरो यो गुणो राष्ट्रभाषायामपेक्षितः स च निखिल जनेभ्यो विवृतद्वारत्वं नाम। राष्ट्रनिर्माणं राष्ट्रसंरक्षणं च न केवलैर्द्विजैः कर्तुं शक्यते। परेषामपि तद्राष्ट्र वासिनामपेक्षा स्यादेव। न वा केवलं पुरुषैरेव राष्ट्रोद्धारः शक्यः, स्त्रीजनोऽपि तत्रापेक्षितः। राष्ट्रे न केवलं द्विजा एव भवन्ति द्विजस्वसारो, द्विजमातरो, द्विजपुत्र्यो, द्विजपत्न्यो ऽपि निवसन्ति। न केवलं द्विज स्त्री पुंसा एव राष्ट्रे तिष्ठन्ति। सच्छूद्रा असच्छूद्रा यवनाः क्रिश्चियना जैना बौद्धाः सिक्खादयश्चापि तिष्ठन्ति। वेदेषु वेदाङ्गेषु च द्विज पुरुषाणामेवाधिकार इति धिया यदि राष्ट्र स्त्रियो राष्ट्रशूद्रा राष्ट्रयवना राष्ट्रक्रिश्चियना राष्ट्रपारसीका राष्ट्र-जैना राष्ट्रबौद्धा राष्ट्रसिक्खाश्च संस्कृतव्याकरणाध्ययनाद्विवर्जिताः स्युः कथं प्रतिपादयितुं शक्यं संस्कृतभाषाया राष्ट्रभाषत्वम्। शूद्रेभ्योऽति-शूद्रेभ्योऽन्त्यजादिभ्यश्च यदि निलीयते संस्कृतभाषा को नाम गुणः स्यान्तस्यां राष्ट्रस्य भाषा भवितुम्? राष्ट्रैकदेशे व्यवह्रियमाना भाषा न कदापि राष्ट्रभाषा भवितुमर्हति।

अन्यच्च "किंच कोऽपि देशः किमपि राष्ट्रं सनातनधर्म सभा न भवितुमर्हति। राष्ट्रे तु शैवा अपि स्युः वैष्णवा अपि स्युः बौद्धा जैनाश्चापि स्युः, आर्यसामाजिका अपि स्युः, पारसीका ईसायिनो मुसलमाना अपि स्युः नास्तिका वैज्ञानिकाश्चापि स्युः। भाषाभाषण-जन्य स्वर्गनरकनियमास्तुः कथं स्वीकृताः स्युः? एतादृशं राष्ट्रनिर्माणं तु सर्वथा दुःशब्दं यत्र सर्वे जनाः सनातनधर्मावलम्बिन एव भवेयुः।"

आशासे सुधिया पाठका संस्कृतस्य विचारशालीमिमां स्वम-नसि निर्धारयाति संकुचित विचारान् स्वहृदयङ्गमान् उदार दृशा नवीन-युगस्यचावश्यकतयावलोकयेयुरिति।

कुलभूषणः

श्रीः

# जापान देशे शिक्षा प्रकारः

( श्रीयुत चमनलाल: प्रताप कालेज श्रीनगरस्थ: )

केचित् सोत्तरप्रश्नाः यान् जापान देशेऽध्यापकः छात्रान् पृच्छति ते इमे निम्नलिखिताः—

(१) प्रश्नः—(चित्रं तर्जन्या संकेतं कृत्वा अध्यापकः पृच्छति) कोऽयं देशः ।।

उत्तरं—इयं नो मातृभूमिः ।

(२) प्रश्न—उद्देश्यं वो जीवनस्य किम् ?

उ०—स्वदेश जातिसेवा ।

(३) प्र०—भवच्छिक्षायाः उद्देश्यं किम् ?

उ०—स्वदेशैश्वर्य वृद्धिः ।

(४) प्र०—भवतः प्रियतरं किम् ?

उ०—निज मातृभूमिः ।

(५) प्र०—भावत्का प्रबलेच्छा का ।

उ०—स्वदेशार्थं मरणम् ।

(६) प्र०—जापानदेशस्य धनं किम् ?

उ०—नवयुवका एव धनम् ।

(७) प्र०—देशस्यास्य का शक्तिः ।

उ०—महिलाः ।

(८) प्र०—देशोऽयं कस्मिन् वस्तुनि अमेरीका देशतः उत्कृष्टतरः ?

उ०—कलाकौशले शिल्पविद्यायाञ्च ।

(९) प्र०—भवद्देवालयः क ।

उ०—क्रीड़ा प्रदेशाः एवास्मदीयाः देवालयाः ।

(१०) प्र०—किमर्थं भवज्जन्म जापानदेशे ?

उ०—निजदेश कीर्तये ।

(११) प्र०—का ते भक्तिः ?

उ०—जातिदेशभक्तिः राजभक्तिश्च ।

(१२) प्र०—कस्मिन् घृणा ते ?

उ०—राजविद्रोहे।

(१३) प्र०—जापानदेशः कस्मिन् विषये देशान्तरेभ्यः ज्यायान् ?

उ०—नवयुवकशक्तौ ।

(१४) प्र०—अन्यदेशुषु गत्वा करणीयं किम् ?

उ०—पुरुषार्थः, स्वजाति प्रशंसा च ।

(१५) महत्तरं पापं किम् ?

उ०—पराधीनता, कृतघ्नता पारस्परिक घृणा च ।

(१६) प्र०—जापानदेशस्य सन्मान रक्षकाः के ?

उ०—वयं नेतरे ।

(१७) प्र०—केन वर्धितोऽसि ?

उ०—मातृभूम्या राज्ञा च ।

(१८) प्र०—त्वं देशं किं निर्मातुमिच्छसि ?

उ०—क्रयविक्रयस्थानमखिल जगतः ।

(१९) प्र०—कथं कर्तुमर्हसि स्वदेशं समृद्धिशालीनम् ?

उ०—आत्मदेशीयवस्तुनां सदुपयोगेन ।

(२०) प्र०—स्वदेशं कथं धनाढ्यं करिष्यसि ।

उ०—स्ववस्तूनां अन्यदेशेषु प्रेषणेन ।

(२१) प्र०—के ते मुख्यगुणाः ?

उ०—पित्रो आज्ञापालनं, राज्ञः सन्मानं, जातिसेवा, अन्येषु प्रीतिः, पुरुषार्थश्च ।

(२२) प्र०—जापान निवासिनां किं भूषणम् ?

उ०—कलाकौशलम् ।

(२३) प्र०—जापान महिलानां किं भूषणम् ।

उ०—शिक्षा गृहकार्यञ्च ।

---

# विंशति संख्याकः रत्नसंग्रहः

( ले—पं० लक्ष्मीचन्द्र शास्त्री )

(१) प्रातरेव ब्राह्ममुहूर्ते तुर्यवादनसमये प्रत्यहः जागर्तव्यं यतश्च अयमेव कालः तत्वातत्व विवेचनात्मक ब्रह्मविचारस्य—

(२) ततो निवृत्योपविशन्नेवासने जपात् ध्यानाद्वा पूर्वं परमेश्वर प्रार्थना विधेया यतश्च तूर्णमेव वशीकुरुते चित्तमीशाभ्यर्थना।

(३) जपार्थं ध्यानार्थं वार्धहोरान्तं यावत् पद्मासनेन सिद्धासनेन सुखासनेन वा भाव्यम् प्राङ्मुखं प्रत्यङ्मुखं वा। ब्रह्मचर्यस्थितये शीर्षासनं स्वास्थ्यहेतवे सर्वाङ्गासनञ्च विधेयम्। प्राणायामश्चाभ्यसनीयो नित्यम्।

(४) ॐ नमः शिवाय, ॐ नमो नारायणाय, ॐ नमो भगवते वासुदेवाय, ॐ सर्वनाभाय नमः, सीताराम, श्रीकृष्ण, हरेकृष्ण, हरि ॐ इति जपः प्रत्यहमेकतो विंशतिमालान्तं संपादनीयः गायत्रीजपस्तु नियमितरूपेण कार्यः सततं यतोहि चित्तवृत्ति निरोधायायमेव प्रधानं साधनम्।

(५) आहारः सात्विको भवेत्। मारीचलशुनपलाण्डुतैलाम्लादिकं न भुज्यते। मिताहारो भवेत्। येषु द्रव्येषु अधिका रुचिः, तत्त्यागाभ्यासोऽपि मासार्थं पक्षार्थं वा सम्पादनीयः। मासार्थं लवणं मधुरं च परित्यज्य रसनेन्द्रिय संयमोऽपि आवश्यकीयः प्रतिवत्सरम्।

(६) जपार्चनध्यानहेतवे विजनं कोष्ठमेकं ( गृहस्य ) पृथक् सम्यग्रूपेण सम्पादनीयम्। यदुद्घाटनानुद्घानादिकञ्च स्वीयकरे भवेत्।

(७) प्रतिदिवसमुत प्रतिमासं स्वोयायतो प्रतिरूपकतो प्रत्याणकं दानमपि नियमितरूपेण देयम् दीनेभ्यः।

(८) नैजां विचारशुद्धिमनुष्ठातुं 'गीता' रामायणोपनिषद्वेदादि धर्मग्रंथेषु कस्याप्येकस्याध्ययनमपि निश्चितरूपेण कार्यम्।

(६) वीर्यमेव नः जीवनम्। अतः सर्वेन्द्रिय निग्रहत्वेन विशेष-रूपेण गोपनीयमिदं। वीर्यमेवेश्वरविभूतिः ब्रह्मशक्तिश्च। जीवनस्यात्मविचारस्य बुद्धेश्चौषधी संजीवनी नाम वीर्यमिदम्।

(१०) विस्मर्यापि कुसंगे न गन्तव्यं, सत्संगवासो सदैवाभ्यसनीयः। यतश्च कुसंगतिरेव जीवनकुठारः। धूम्रपानं मद्यं मांसादि अभक्ष्यापेयं त्याज्यम्। कस्मिन्नपि व्यसने नानुरक्तिरेव शुभा। यतोहि व्यसनान्येव नाशयन्ति जनान्।

(११) मासिकं पाक्षिकं वा व्रतादिकमपि निराहारमेव कर्तव्यं निरन्तरम्। अशक्तौ दुग्धाहारं फलाहारं वा।

(१२) जपमालिका सदैव निकटस्था भवेत् निशि स्वप्न समये स्वीयास्तरणोपवर्हस्याधस्तात् स्थापनीया।

(१३) नियमितरूपेण सततं होरा द्वयान्तं यावत् 'मौनव्रत-स्याप्यभ्यासो विधेयः।

(१४) मितभाषणंवाणी संयमार्थं प्राणानुपेक्ष्य सत्यमेव ब्रूयात् नानृतम्। सत्यभाषणं, मधुरभाषणमिति त्रिविधं भाषणमेवाभ्यसनीयम्।

(१५) विजयः प्राप्तव्यः स्वीयेच्छाभ्यः। संतोष एव परं निधानमित्येवं स्वल्पे वस्तुनि संतुष्येत्। चिन्तोत्पादनम् वृथैव जीवनं सरलं भवेत्। विचार उन्नतश्च स्यात्।

(१६) अहिंसा परमो धर्मः, इति वाक्कायमनोभ्यां कमपि न क्लेशयेत् कोऽपि। सदाचारदयाशिष्टाचारप्रभृतिभि र्सद्गुणैः क्रोधाभिमानमोहासन्तोषादिदुर्गुणोपरि जयमवाप्यम्। सद्भावैरेव मनसोऽसद्भावकालुष्यं प्रक्षालयेत्।

(१७) स्वावलम्बनमेव सर्वश्रेष्ठं सुखमतो भृत्येषु नाश्रयं विदधीत परमुखापेक्षी न भूयात्। स्वपद्भ्यामेव स्थिरो भवेत्।

श्रीः

(१८) अह्नि यत् मर्यादोल्लंघनं संजातम् तन्निशि स्वपनात् पूर्वमेव स्मर्तव्यम् पर्यालोच्य दिवसकृतानिकार्याणि चाभ्यासः कार्य आत्म निरीक्षणस्येतिदिनचर्यापि सततं लेखनीयात्मसुधारार्थम्, गतं न शोचेत्, कृतं न गणयेदुपकारम्।

(१९) गृहीतकेशो मृत्युरिति विज्ञाय नैजकर्तव्येभ्यः नित्य नैमित्तिककर्मभ्यश्च न कदापि भ्रश्येत्। स्वीये चरित्रे सदाचारे च विशेषतरं ध्यानं योग्यम् प्रयासो कार्यश्च महान् पूर्णसच्चरित्रो भवितुम्।

(२०) निद्रातो जागरन्नेव प्रभाते-स्वपनात्पूर्वं रजन्याञ्च भगन्नामसंस्मरणमावश्यकीयं कार्यं नः। स्वीयं मन्येत् भगवदङ्घ्रिच्युतं पुष्पभूतम्।

अन्ते चात्मानं समर्पयित्वा शरणागतशरणचरणयोः यावज्जीवमात्मानं सुखिनं कुर्याज्जनः। एतदेवरत्नोपहारमुपहारीकृत्योपविशति जनोऽयं भवदाशीर्भिर्प्रफुल्लितः पांचभौतिकः तरुः। अन्ते प्रार्थये हरिम्।

क्लेशान्विनाशय विकासय हृत्सरोज,
मोजो विजृम्भय निजं नरिनर्तयाङ्गम्।
चेतश्चकोरचितिचन्द्र मरीचीचक्रमाचम्य,
सम्यगमृतीकुरुविश्वमेतत् ॥१॥

किं च हे भगवन्! त्वां निजाः भक्ताः,
स्वपुत्रेभ्यः प्रियाः सन्ति
दुःखावर्ते यदा मग्नाः।
तदा त्वद्रक्षिताः सन्ति ॥२॥
शिवं भूयात् सर्वेषामिति शान्तिः शान्तिः शान्तिः।

---

# समालोचनम्

## मीमांसा प्रकाशः—

पुण्यपत्तनस्थायाः (मोहमई प्रान्तीया) मीमांसा ग्रन्थ प्रकाश समितेः मासिकं पत्रम्। ४०३, सदाशिव, पुण्यपत्तनम् २। (Mimansa Prakash office 403, sadashiva, Poona 2) वार्षिकं मूल्यं ५) भारतवर्षे, १०) अन्यदेशेभ्यः। श्रीयुक्त वामन शास्त्री किंजवडेकरैः मीमांसिक शिरोमणिभिः सम्पादक महोदयैः सम्पादितम्; श्री गोविंद बलवंत मकाडे बी० ए० इति उपाधि-धारिभिः तथा च पं० रामचन्द्र शास्त्री किंजवडेकरैः उप-सम्पादकाभ्यां रचितम्। गम्भीर दार्शनिक विचारयुक्ताः मीमांसाशास्त्रानुमोदिताः सुन्दरा उपयोगिनश्च लेखाः प्रथम सञ्चिकायां प्रकाशिताः। महत्कार्यमिदं महापुरुषाणामेतेषां यत् बहुकालात् पुण्यपत्तने वैदिकधर्मस्य विशेषतः वैदिक मीमांसा शास्त्रस्य ज्योतिमुद्दीपयामासुः। "एतन्मीमांसाशास्त्रं प्रामुख्येन वेदार्थ व्यव्यवस्थास्थापनेन धार्मिकेतिकर्तव्यताभागं पूरयति। तथापीदं शास्त्रं देहलीदीपन्यायेन समाजोपकारक सर्वविधवि-षयेतिकर्तव्यताप्रपूरकं सत्सर्वशास्त्रेषु मूर्धन्यभावं भजत" इति उपदिशन्ति सम्पादकमहाभागाः प्रस्तावनायां मीमांसाप्रकाश पत्रिकायाः।

पूर्वमीमांसाशास्त्रस्यासीत् महान प्रचारो भारते वर्षे वैदिक काले महाभारतयुद्धादनन्तरम्। परं धर्मान्धैः स्वार्थपरायणैः पण्डितैः यागानुष्ठान व्याजेन सर्वत्र भारते पशु हिंसायाः प्रचुरः प्रचारः कृतः। सर्वत्र यज्ञेषु पशुवधो दर्शितः। षष्ठ्यां शताब्द्यां खृस्तात पूर्वं महात्मा गौतम बुद्धेन तथा च महावीरप्रसादेन जैनमुनिना, बौद्धजैनमतप्रवर्तकाभ्यां, मीमांसकशास्त्रस्य घोरं खण्डनमभूत्। न केवलं पूर्वमीमांसैव खण्डिता। परञ्च वैदिक

धर्मोऽपिऽनेन साकमेव जर्जरीकृत एताभ्यां धर्मप्रवर्तकाभ्याम्। वेदा अनादृता भारते वर्षे सर्वत्र बुद्धधर्मप्रचारश्च कृतः। बुद्धकाल पर्यन्तं वैदिकधर्मस्य सूर्यास्तं गतः। अवस्थामिमामनुज्ञाय श्री महात्मना कुमारिल भट्टेन पुनरुद्धाराय वैदिक धर्मस्य महान् यत्नः कृतः। ततःश्री स्वामी शङ्कराचार्यस्याद्वैतवाद वैदिक धर्मपथः प्रचारेण पुनरुज्जीवितो बभूव वैदिको धर्मः।

पूर्व मीमांसापथः प्रचारेण वैदिकधर्मस्य पुनरुद्धारः स्यादिति नास्ति संदेह लेशोपि। मीमांसा शास्त्रस्य पुनरुज्जीवनोपायाः ६, १० प्रकारकाः संदर्शिताः सम्पादकमहाभागेन, येषु तस्य शक्तिः संलगेत्। न केवलं भावि काले प्रयत्नं करिष्यन्ति समितेः सदस्याः परं कतिपय वर्षेभ्यः कतिपयाः संस्थाः प्रचलन्ति उद्योगेन महानुभावानामेतेषाम्। यथा पुण्यपत्तने मीमांसा विद्यालयः अखिल भारतीयहिन्दूधर्म संशोधन सुधारमण्डलम्, विद्वत्परिषद्, संस्कृतमहाविद्यालयः मीमांसामहाविद्यालय अग्निहोत्रशाला इत्यादि संस्थाः १४, १५ वर्षेभ्यः प्रचलन्तिपुण्यपत्तने। महत् कार्यमिदं वामन शास्त्री गोविन्दबलवंतमकोडे, रामचन्द्रशास्त्रीत्यादि पण्डितवर्याणाम्।

मीमांसा प्रकाश पत्रस्य विशेषता त्वस्याङ्गल संस्कृत भाषयोः प्रकाशितस्य विद्यते। अर्धभागादप्यधिकं स्थानमांगल भाषाया भारतीय न्यायालयानां हिन्दूधर्मशास्त्राधारभूतानामभियोगानां समालोचना विधानाय नीतमस्ति। हिन्दू संस्कृतिज्ञानार्थमपि केचन लेखाः दरिदृश्यन्ते। धन्यवादार्हाः पण्डितवर्याः पुण्यपत्तनस्थिताः यै महत्कार्यमिदमारब्धम्। स्वागतपूर्वकमाशीर्भिः साधु वादं नादपामः पत्रस्यास्यप्रकाशनाय।

## उजयन सम्बन्धि—

'उजयन सम्बन्धि' पुस्तकं महाशयेन केशवराओ बलवन्त

[ शेषदल पृष्ठ ३ देखिये ]

# बौद्धानां धर्मप्रचारक्रमः

(ले पं० शिवनाथशास्त्री साहित्यभूषणः साहित्यमणिः

श्रीनगरम् )



निर्विकल्पे नमस्तुभ्यं प्रज्ञापारमितेऽमिते ।
या त्वं सर्वानवद्याङ्गि निरवद्यैर्निरीक्ष्यसे ॥ १ ॥
आकाशमिव निर्लेपां निष्प्रपञ्चां निरक्षराम् ।
यस्त्वां पश्यति भावेन स पश्यति तथागतम् ॥ २ ॥
तव चार्यगुणाढ्याया बुद्धस्य च जगद्गुरोः ।
न पश्यंत्यन्तरं सन्तश्चन्द्रचन्द्रिकयोरिव ॥ ३ ॥

सन्ताः! निर्विवादमेतद्भारतवर्षस्तु बहुकालात्प्रभृति विद्यायाः खनिरासीदिति । किमपि शिल्पं कापि कला नासीद्याभारते न विद्यते स्म । शिलानां काष्ठस्य च द्रवीभावकरणादीति च यत्त्वधुनापि नवीनविज्ञानेन न सिध्यति, तत्तु प्राचीनस्थपत्यादीनां साधारणं कर्मासीत् । किं बहुना प्राचीनं कलाकौशलं नास्तीति संप्रति, कारणमत्र साधनभूतपुस्तकानामभावः । लक्षसंख्यकानि पुस्तकानि गुणागुणाविचारियवनराज्याक्रान्त्या लुप्तानि । यवनराजानस्तु हिन्दूनामिदं पुस्तकमिति मत्वैव शारदालिपि-नागरीलिपि-गुप्तकालिप्यादि प्राचीनलिपिलिखितं बाह्यत एव दृष्ट्वा तदन्तर्गतगुणादिके दृष्टिमपि न विदधुः, केवलं पुस्तकालयान् दाहयन्तिस्म । काश्मीरेषु विजयेश्वरप्रान्तवर्तिनं पुस्तकालयमेकं दाहितं षोडशदिनं यावत् प्रज्वलन्नेवासीत् कतिसंख्यकानि पुस्तकानि तस्मिन्नासन्निति स्वयं विचारयन्तु विद्वांसः । द्वितीयं पुस्तकालयं तदैव जले ब्रोडितमधुनापि [ दूरवी

न ] यन्त्रेण "मुसुत्थ" इति नामधेये सेतुबन्धेऽविनष्टलिपिकं भूर्जपत्रलिखितं [ आश्वारह्रदे ] वर्तते । कोटिपरिमितव्ययेन पुनरपि प्राप्स्यते तत् समये । क्वचन स्थानेषु यवनविप्लवाक्रान्तैर्विद्याधनैः पुरुषैः स्वकीयाः पुस्तकभण्डाराः पृथिव्यां निखाताश्च । केवलं तदानीं तालपत्रेषु भूर्जपत्रेषु चासील्लिपिकर्म । लिप्यां कलाकौशलं च तादृगासीत् । तत्समयमसी जलेन मृत्तिकया वा न विकृतिमभजत । यथाद्यापि तानि वर्णानि न लुप्तानि । पश्चिमदेशीयैः रिसर्चकार्यपरायणैर्विद्वद्वरैस्तानि प्राचीनपुस्तकानि यत्र तत्र सुवर्णेन क्रीतानि । बहुमानपुरःसरं सगौरवं स्थापितानि च । कालेकाले तानि संमुद्य पुरावृत्तापिपासून्नाह्लादयन्ति ते । यथा तद् दृष्ट्वा भारतीयैरपि राजभिर्नव्यप्रणाल्या स्वस्वदेशेषु पुस्तकालयानि संपादयित्वामुद्रितपुस्तकानि मुद्रापितानि । अहो पश्चिमदेशीयानां जीर्णोद्धारप्रेम्णा भारते पण्डितानां वृत्तिः । तेषां जयपताका सततं लसतु ।

तेष्वेव प्राचीनपुस्तकेषु मन्मित्रेण डा० नलिनाक्षदत्त M.A., B.L., P.H.D., D. Litt., महाशयेन "पञ्चविंशतिसाहस्रिका प्रज्ञापारमिता" नामधेयं बौद्धग्रन्थरत्नं तालपत्रसमानाकारं जरदवस्थाकं समुपलभ्य संस्कृत्य संमुद्रितम । मुद्रणान्तरमेव योरूपीयविद्याप्रेमिभिः पण्डितप्रकाण्डैर्जीर्णोद्धारपरायणैरुत्तमपरीक्षायां (Thesis "Pt. ii" approved for the Degree of Doctor of Literature in the University of London) नियमितम् ॥ उपहाररूपेण ममापि प्रहितस्यास्य पुस्तकस्य दर्शनादनुमीयते, यद्योगदर्शनान्न्यूनं न बौद्धदर्शनम् । केवलं वयं मन्यामहे यत्पुमान् पुरुषयोनौ जाजायते, स्त्रीतु स्त्रीयोनौ जञ्जन्यते । परमत्र बौद्धदर्शने न तथा पुमान् कर्मवशात् स्त्रीभवति, स्त्र्यपि पुमान्निति विशेषः । बौद्धानां धर्मापि महामहान् ।

मयापि बौद्धपुस्तकमेकं भूर्जपत्रेषु लिखितमष्टशतवर्षपुरातनं गुप्तकाक्षरलिखितं "आर्यभैषज्यगुरुनाममहायानसूत्रं" नाम प्राप्तम् ।

तस्य मस्यतिदृढा पत्राणि नवीनान्येव प्रतिभासन्ते । तत्पुस्तकस्थविषयं संक्षिप्य पाठकमहानुभावानां पुरः स्थापयामि । यथा प्राचीनभाषाज्ञानं, बौद्धानां धर्मप्रचारक्रमश्च विज्ञायेतेति । तद्यथा–

(उपक्रमः)

भगवान् वैशालीं पुरं गत्वा परिषदि धर्मं देशयति स्म । तत्र मञ्जुश्रिये राजकुमाराय पूर्वसत्वानां प्रणिधानान्युवाच । इतः प्रदेशात् पूर्वदिग्भागे लोकधातुप्रदेशे भैषज्यगुरुवैडूर्यप्रभुर्नाम सुगतो विहरति । स बोधिसत्वचर्यां चरन् द्वादश प्रणिधानान्यकार्षीत् । तत्र सूर्यवैरोचनो चन्द्रवैरोचनश्च सद्धर्मकोषान्नधारयताम् । तथा भवतां प्रणिधानं करणीयम्, ये केच सत्त्वा लोकाभिभूता दानादिसंविभागं विना धनं संचिन्वति । ते यमलोकस्थिता भैषज्यगुरुप्रभस्य तथागतस्य नामश्रवणात् प्रेतलोकाच्च्युता मनुष्यलोक उत्पद्य जातिस्मरा दानादिगुणशीलिनो महाकारुणिकाश्च भविष्यन्ति । अथानन्दं धर्मं कथयति, त्राणमुक्तस्य धर्मदेशनानन्दं प्रति ॥ ‡

अनेकैर्बोधिसङ्घैः सह भगवान् श्रावस्त्यां जगाम । तत्र भिक्षार्थं नगरं प्रविष्टः । तत्र नगरे प्रज्वलति किमिदं नगरं ज्वलतीति जनेषु वदत्सु वृद्धः कश्चिदाह–भगवान् बुद्धः पुरं प्रविष्टः । अथासौ वृद्धस्तं जनसङ्घं भगवतो जिनस्य गुणवर्णनमाह–अथ भगवान् नगरावलम्बिकासंज्ञादारिकागृहं प्रविष्टः । सा च दारिद्र्यात्संशोचयन्ती, देवपुत्रेणान्तरिक्षस्थेन प्रोक्ता । इमानि दिव्यवस्त्राभरणानि परिधायेमं शतरसभोजनपिटकं भगवते उपनामय । तथा कृते भगवांस्तामाह । यत्तव दारिद्र्यान् स्त्रीभावाच्च मोक्षो भविष्यति । सा गृहं गन्तुं प्रारेभे । भगवांस्तां स्तुवन्तीं गन्तुकामां प्रतिनिवर्त्य पूर्वजाति-

‡ अनेन बौद्धधर्मे दानादि प्रतिपाद्य, अदत्तदाना यमलोके प्रेतगतिं प्राप्नुवन्ति। दानप्रभावैनव मनुष्यलोके धनाढ्या भवन्ति इति दानस्य महत्वं यमलोकस्यास्तित्वं च प्रतिपन्नम् ॥

वृत्तमाह । पद्मावत्यां राजधान्यां पद्मप्रभस्य राज्ञो गृहे जाता दुहिता बभूव । एकदा आगताय रत्नशिखिने भिक्षवे सा दारिका भिक्षां दातुं निर्गता मुण्डिने भिक्षां न दास्यामीति मत्वा प्रतिनिवर्तत । तत एव बहुजन्मसु सा त्वं दारिद्र्यं प्राप्तवती, केवलं तद्दर्शनसंस्कारेण बोधिव्याकरणं प्राप्स्यसि । भविष्यति काले नगरध्वजो नामा बुद्धो भविष्यसि । बुद्धक्षेत्रं शोभनं भवेत् । ‡ अद्य प्रभृति सप्तमे दिवसे मृत्वा पूर्वस्यां मगधेषु राज्ञ अजातसेनस्य पुत्रस्त्वं भविष्यसि । एतदेव पश्चिमं जन्म स्यात्, इत्युक्त्वा भगवान् श्रावस्तीपश्चिमद्वारतो निर्गत्य जैतवनं जगाम । तदाज्ञया गण्डीशब्देन सर्वे भिक्षव आगत्य भिक्षामभुञ्जत । भगवदाज्ञया नन्दिमित्रः अजेतसेनस्य राज्ञो गृहमासाद्य तत्र भिक्षां भुञ्जानो अतिष्ठत् । अथ स सुशोभनं नानावृक्षपक्षिगणावकीर्णं उद्यानं प्रविश्य, स्वर्णपक्षिणः "नमो बुद्धाय" इति उच्चारयन्तः श्रुत्वा, पुनरपि राजगृहं प्राविशत् । राजा तदर्थं उद्याने कुटीममात्येनाकारयत् । तत्र नन्दिमित्रो विकिरणप्रणिधिं समापद्यत । सप्ताहानन्तरं सह पुत्रेण राज्ञा उद्यानं प्रविश्य तत्र कुट्यां प्रविश्य खण्डशस्तच्छरीरं दृष्ट्वा स्वात्मघातं कर्तुमुदयच्छत् । पुत्रोक्त्या स्वात्मघातदोषश्रवणोत्तरं चक्रमप्रदेशं सह पुत्रेण ययौ । भिक्षुर्व्युत्थाय राजानमुपागमत् । तदैव राजा भिक्षुधर्मप्रवणो भूत्वा सह पुत्रैर्बुद्धं द्रष्टुं जैतवनमगात् । तद्दर्शनप्रभावेन सञ्जातवैराग्यवृत्तिः प्रव्राजितुकामो राजा भगवन्तं संभाव्य तदाज्ञया गृहमाययौ । सुशोभितां राजधानीं तदीयां सह शिष्याभ्यां सप्तमे दिवसे प्राप । तत्र राजानं राजपुत्रं च सामात्यं सान्तःपुरजनं धर्मदेशनया प्रव्राजितवान् । राजा च स्वनगरे विहारं निर्ममे । जैतवनं तदनु गत्वा भगवानानन्देन प्रष्टो राज्ञः प्रव्रज्याफलमाह । आनन्दस्तुत्यनन्तरं काश्यपमहाश्रावकस्तुतिगाथाः । शरद्वतीपुत्रस्य च ॥ पुस्तकलेखकनाम नरेन्द्रदत्त इति उपसंहारः ॥

---

‡ अत एव ज्ञायते दानधर्मप्रभावेन स्त्र्यपि पुमान् भवति ।

प्रक्रान्तानुसरणेन तावज् ज्ञायते, कलाकौशलं प्राचीनमत्याश्चर्यकार्यासीत् । यस्य शतांशमपि वर्तमानयुगे नाधुना दृश्यते । जीर्णोद्धारकार्यसंलग्नानां पौरस्त्यानां पश्चिमीयानां विदुषां कृपया शनैः शनैः संपत्स्यते सर्वं समयं ॥ इति शम् ।

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥

---

॥ ओ३म् ॥

# मातृभूमिभक्तिर्वेदश्च

[ ब्रह्मचारी सत्यदेवो गुरुकुल पोठोहारवास्तव्यः ]

अयि महनीयाः सभ्या आर्यमिश्राः ?
सर्वविदितमेवैतद्यत् प्रत्येको मानवोऽस्मिन् जगति उत्तमानि कार्यजातानि सम्पादयन् सुखस्वरूपमव्ययप्राप्तिमभिलषते । अयमेव तस्योद्देशो यदहं सद्गतिं प्राप्नुयाम् यत्किञ्चिदपि दानादिकं दीयते, तत् सर्वममुं स्वर्गमेव लक्षीकृत्य दीयते । नाकप्राप्तौ यज्ञस्यापि सत्साधनत्वं स्वीक्रियते, यथा हि— स्वर्गकामो ज्योतिष्टोमं यजेदितिश्रुतिः । नात्र कीदृश्यपि विचिकित्सा सम्भवति, यत् स्वर्गः सर्वप्रिय उत्तमगतिश्चास्ति । परन्नीतिकारैरुक्तम् "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" यद्यपि नहि स्वर्गेण साकं कस्यापि पदार्थस्योपमेयत्वं सम्भवंस्तथापि द्वौ पदार्थौ स्वर्गादपि श्रेष्ठतरौ कथ्येते । तयोरेकतरा प्रथमा जननी वर्तते । यस्या गर्भेणास्माकं प्रादुर्भवोऽजायत । या खलु धन्या वर्णनातीतानि कष्टानि भृशं सहमाना पालयित्वा चास्मान् अवर्धयत् । अथापरा जन्मभूरस्ति । यस्यां वयं जनुरगृह्णीम । यस्या अमृतसमेऽङ्के क्रीडन्तो वयं स्वशैशवं [illegible] । यस्याः सुमधुरपुष्पफल-

मूलानां, विविधान्नशाकानामेवमेव सुस्वादुसलिलनिर्झराणां निर्झराणां नीरास्वाददानैर्निजसंहननान्यपोषयाम । त्रिदिवोऽप्यनयोः समत्वे क्षुद्र इव प्रतीयते । प्रथमतस्तावत् मातृस्थानम् । माता यान्यवर्णनीयानि प्रसूतिजानि सहन्त्यपत्यं संरक्षति, कस्तानि मातरं विनान्यः सहिष्यते । तस्यां क्षमतादययोः स्रोतांसि सर्वदानवरतं वहन्ति । स्नेहस्यातलस्पर्शः सरस्वान् तरङ्गायते । केनान्येन मात्रा विनापत्यस्य मङ्गलाभिलाषिणा भविष्यते । जनिन्या नैसर्गिकी ममता दयालुतापत्यं भृशमाकर्षति । एतद्विषयकं प्रत्यक्षप्रमाणं तदा दृश्यते, यदापत्यं कस्मिंश्चिदापत्तौ विद्यमानं स्यादथ काश्चित्तं वेदयेत्तदा तन्मां मां इत्येवमस्फुटं गदत् सर्वप्रथमं मातरमेव स्मरति । मातृभूमिरपि मातृसदृशैव । मातृभूमेर्विशेषतास्तत् प्रत्यस्माकं किंकर्त्तव्यमित्येतत् सर्वमथर्वस्यैकादशकाण्डस्थ—पृथिवीसूक्ते साधु निदर्शितमस्ति । मातृभूमिस्स्वदेशश्चाभिन्नावेव । मातृसमत्वान्मातृभूमिरपि महनीया प्रिया च भवति, परमथर्ववेदेत्वितोऽप्याधिकमुक्तम्–यत्ते मध्ये पृथिवी यच्च नभ्यं यास्त ऊर्जस्तन्वः सम्बभूवुः । तासु नो धेह्यभिनः पवस्व माता भूमिः पुत्रोऽहं पृथिव्याः ॥ मन्त्रेऽस्मिन् ( माताभूमिः पुत्रोऽहं पृथिव्याः ) इत्युक्तम् । अस्याभिप्रायः मातृभूमिर्मम जननी, अहञ्च तस्याः सुतोऽस्मि । अथर्वे साधु निगदितम् "सत्यं बृहदृतमुग्रं दीक्षातपो ब्रह्मयज्ञाः पृथिवीं धारयन्ति । सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु"॥ सत्यवृद्धिन्यायव्यवहार क्षात्रतजदीक्षातपब्रह्मचर्ययज्ञा इमऽष्टौ पदार्थाः पृथिवीं धारयन्ति । भूतभविष्यद्वर्त्तमानकालेषु पालयित्री सा भूमिर स्मभ्यं विस्तृतं स्थानं ददातु । मन्त्रेऽस्मिन् ब्रह्मयज्ञशब्दौ विद्येते । साधारणतो यज्ञशब्दोऽग्निहोत्रादि पञ्चयज्ञवाचकस्तथाप्यस्योत्पत्तिस्थानान्वेषणेन बहवोऽन्येऽप्यर्थाः दृश्यन्ते । देवपूजा-सङ्गतिकरणदानार्थकाद्यज् धातोर्यज्ञशब्दः सिद्ध्यति । इमेऽप्यर्था अत्र संगृह्यन्ते । एवमेव ब्रह्मचर्यद्योतको ब्रह्मशब्दो बृहधर्थकाद्बृहिधातोः सिद्ध्यति । वेदाध्य-

यनवीयरक्षशचिन्तनानामपि ब्रह्मचर्ये समावेशो जायते । "यस्यां पूर्वे पूर्वजना विचक्रिरे, यस्यां देवा असुरानभ्यवर्तयन् । गवामश्वानां वयसश्च विष्ठा, भगं वर्चः पृथिवी नो दधातु "॥ यस्यां मातृभूमौ पूर्वजा विविधानि कर्माण्यकुर्वन्, यस्याममरा अमरद्विषः पराजयन्त । गवाश्वपक्षीणामाधारभूता सा जन्मभूमिर्नो बलैश्वर्यादिभिस्तर्पयेदिति । "विश्वम्भरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशनी वैश्वानरं बिभ्रती भूमिरग्निमिन्द्रऋषभा द्रविणेनो दधातु "॥ अस्यायमर्थः—जगतः प्राणिमात्रस्य पोषिका रत्नाकरा सर्वाधारभूता तैजसपदार्थोत्पादयित्री प्राणिमात्रस्य निवासगृहा मनुष्यसमूहरूपस्याग्नेः पालयित्री इन्द्रद्वारा वृष्टिप्रापिका सा मातृभूमिरस्मान् धनधान्येषु स्थापयतु । एवमेवान्यच्च—" यस्यां समुद्र उत सिन्धुरापो यस्यामन्नं कृष्टयः सम्बभूवुः । यस्यामिदं जिन्वति प्राणदेजत् । सा नो भूमिः पूर्वपेये दधातु "॥ समुद्रसरित्सरसीबहुला स्वाद्वन्नोत्पादक सद्ग्रप्रविशेषा च यास्ति । यस्यां निश्वासप्रश्वासवन्तो गतिमन्तश्च प्राणिनो-गतिशीलाः सा भूमिर्नो भोज्यपदार्थैः संतर्पयेदिति । मान्याः पारिषद्याः ? इमे मन्त्राः दिङ्मात्रेणैवात्र प्रदर्शिताः । येभ्यो मातृभूमिभक्तेः गन्ध उद्गच्छति । वेदेष्वीदृशा एवान्येऽपिबहवो मन्त्राःसन्ति, येषु साङ्ग्रामिकविद्यारीती राजाप्रजयोः कर्तव्याः परिपन्थिभ्यश्च स्वदेशरक्षाप्रकारः प्रदर्शितः । यजुर्वेदस्य मन्त्रभागोऽस्ति । "नमो मात्रे पृथिव्यै " मातृभूम्यै नमः । नमनस्यार्थः सेवैव । चेद्वयं स्ववर्तमानकालिक परिस्थितेर्मन्त्रैरेभिस्तुलनांविदध्याम, तर्ह्याकाशपातालयोर्भेदः प्रतीयेत् । यत्रास्माकीना जन्मभूमिः सर्वविधधनधान्यरत्नैः प्रशस्तजलानादिभिश्च परिपूर्णा, दुर्गमैर्हिमाच्छादितविन्ध्यहिमगिरिभिः सुरक्षिता शोभनपशुपक्षिप्रसवनी, षड्ऋतुमती चास्ति । यस्यां दिवौकसा अपि जन्मने उदकण्ठन्त, तथाच विष्णुपुराणेऽप्युक्तम् " गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे । स्वर्गापवर्गस्य च हेतुभूते भवन्ति भूयः पुरुषासुरत्वात् " ॥ अर्था-

द्यस्या भारतभूमेर्निर्वर्णनानान्तु कथैव का, यां जनुषे त्रिदशा अप्यचीकमन्त; तस्यां वीरप्रसवायां सस्यश्यामलायां भारतभूमौ एव निवसन्तस्तत्सुताः क्षुधार्त्ताः । अद्य ते जठरपूरं भोजनमपि न लभन्ते । तदन्नादिकेन वैदेशिकाः स्वकोशपूरण उद्यतास्ते हि कठिनशरदातपसहानां भारतीयकृषकानामजस्रोद्योगोपार्जितं वित्तं तृणाय मन्यमाना असावधानतया अकार्येषु व्ययन्ते । तदस्य प्रतिक्रियायां किन्ते निर्धनालभन्त इत्यस्यान्वेषणं तत्परिस्थित्यध्ययनेन सम्यकर्त्तुं शक्यते । अस्तु । तत्किमेतेषां दुःखानां निदानम् ? नन्वेतदेव परायत्तत्वम् । साम्प्रतं नेयमस्मा कं मातृभूमिरस्माकं, किन्तु वैदेशकानाम् । नयन्तु तेषां परिचारका विशेषतः क्रीताः । अस्माकं जीवितं तद्भृत्यैर्नहि नहि तद्कृषकैरपि निकृष्टतरं विद्यते । यतो हि न वयं ताः सुविधा नोऽधिगच्छामो यास्तद्कृषका अधिगच्छन्ति । एतदेव कारणं यद्वयं क्षुधार्ताः नग्नाश्च स्म । सुवर्णचटकेति नाम्ना ख्याता भारतभूमिरद्य स्वास्तित्वमपह्नवत्यस्ति । कोऽस्मदन्यो हतभाग्यो भविष्यति, ये वयं स्वविचारानपि स्वतन्त्रतया प्रकटियतुं नाज्ञप्ताः । इतोऽप्यधिकं किं दासत्वं स्यात् ? तत्किं वयं निश्शक्ता निर्बलाश्च सञ्जाता, यदस्य प्रतिकारो न निधीयते । नैवं नैवम् । सशक्ता वयमधुनापि, परं सा शक्तिरस्मदीयान्तरितास्ति । न तस्य प्रकाशनप्रकारो विज्ञायत अस्माभिरत एव वैदेशिका अस्मान् प्रतिपदं तिरस्कुर्वन्ति । साधूक्तञ्च नयज्ञैः — अप्रकटीकृतशक्तिःशक्तोऽपि जनास्तिरस्क्रियां लभते । निवसन्नन्तर्दारुणि वह्निर्लङ्घ्यो न तु ज्वलितः ॥ बलिनोऽपि यावत् स्वबलं न प्रकटयन्ति, तावत्तिरस्क्रियन्ते । यथाहि काष्ठे कृपीटयोनिः सदास्ते । परं यावन्नैजं स्वरूपं न प्रकाशयति, तावत् क्षुद्रपिपीलिकाभिरपि लङ्घ्यते । प्रकाशिते तु सति स्वरूपे मदमत्तविशालगजैरप्यलङ्घ्यो भवति । ईदृश्यैवास्मदीयदशा वर्त्तते । बहुकालं यावद्वयं दुर्मौनमाकलय्य मातृभूमेरीढां पर्यषद्दामहि । परमिदानीं " [उत्तिष्ठत सन्नह्यध्व-

मुदाराः केतुभिः सह ] " इत्तुच्चैरुच्चार्योत्थातव्यम् । स्वातन्त्र्य संग्रामाय सज्जैर्भाव्यम् । मातृभूमिमुक्त्यै सर्वविधकष्टसहनमावश्यकम् । चेद्वयं श्रमोपार्जितं स्वं स्वं स्वदेश एव स्थापयेम, न विदेशेषु प्रेषयेम, तदा देशः पुनरपि धनधान्यसम्पन्नः स्यात्, उन्नतिमांश्च सदा स्यात् । जीवितोद्देशं स्पष्टयन्नथर्वा गदति— " आरोहणमाक्रमणंजीवितोऽयनम् " उन्नतिर्वृद्धिश्च जीवनस्योद्देशः । अतः— " प्रेता जयत नरः " ॥ मान्याः? एधध्वम्, विजयध्वम् । ऋग्वेद उपदिष्टम्— " उपसर्प मातरं भूमिम् " ॥ मातृभूमिं सेवध्वम् । ततश्च— " सा नो भूमिर्वर्धतं वर्धमाना " अस्माभिर्वर्धिता सा भूमिरस्मान् वर्त्स्यति । अस्माभिः सर्वतः सम्पन्नायां विहितायां मातृभूमौ सर्वेऽस्मान् श्लाघिष्यन्ते । अहो सुस्पष्टमुक्तं वेदे— " यतेमहि स्वराज्ये " ॥ सुनिश्चितमेवैतद्यदेकदा यत्नेनिष्फले सति निराशैर्न भाव्यं मुहुर्मुहुः— " चरैवेति चरैवेति " ॥ यतितव्यं यतितव्यम् । यतो ह्येष नियमः— लक्ष्ये महति महान् यत्नः । पर्य्याप्तयत्नानन्तरं साफल्यं सिद्धमेव । यत्ने कृते कार्यस्यार्द्ध एव विन्यासोऽशुभोदर्कसम्भावनया नोचितः । वैदेशिकेभ्यो मातृभूमिरक्षणे— " असहायः समर्थोऽपि तेजस्वी किं करिष्यति' इति नियमानुसारं सर्वसाहाय्यमपेक्षते । सर्वेष्वैक्यं स्यात् । सर्वे मातृभूमिसेवां स्वावश्यकं कर्म जानेयुः । सर्वेषां विचारेष्वैक्यं स्यात् । एकतायां बलमस्ति । तद्द्वारैव कार्यारम्भः क्षेमकरः । आरम्भतोऽन्तत ऐक्यं स्यात् । अथर्वोपदेशानुसारं— " मा वियौष्ठ ॥ ऐक्यभंगो न स्यात् । ऐक्यभंगस्योदर्क उक्तो वेद एव— " मिथो विघ्नाना उपयन्तु मृत्युम् " ॥ मिथः कलहमाना नश्यन्ति । मान्या महानुभावाः ? बहवः किलाभूवन् देशभक्ता दीर्घदृष्टयो धीरा वीराश्चास्मिन्वर्षे परत्र च । वीरवरौ प्रतापशिनराजौ नासहतामाजीवनं जन्मभूमेरवमानम् । नयबलादिभिर्देशमसेवताम् । दशमो गुरुर्गोविन्दसिंहः स्वातन्त्र्यरक्षायै अनर्घानसूनप्यर्पयत् । ऋषिवरदया-

नन्द-राजाराम-मोहनरायावपि भारतभूमेरुद्धारायाहर्निशं प्रायतताम्। आधुनिका महात्मागांधी जवाहरलालप्रभृतयोऽपि देशसेवायै सम्मान्योच्चराजकीयपदानि सांसारिकैश्वर्याण्यमुचन्। विदेशीयो महावीरो नैपोलियनोऽपि स्वसमयस्याद्वितीयो देशभक्तो बभूव। आंगलीयानां स्वदेशानुरागोऽनुकरणीय एव। आदरणीया महानुभावाः? चतुर्षु वेदेषूपनिषत्सु च मातृभूमिभक्तेरुपदेशो यत्रकुत्रचित् दृश्यते। सर्वैर्मनुष्यैः स्वदेशं प्रति कृतज्ञैर्भवितव्यन्तु कृतघ्नैः। कृतोपकाराविस्मरणमेव पुँस्त्वम्। शारीरिक-सामाजिकात्मिकोन्नतिर्देशसेवायाः प्रथमं द्वारम्। शक्तिमान् एव स्वावलम्बी निर्भयश्च भवितुं शक्नोति। निर्बलो नर एवं विध उच्चेऽतिगहन उद्देशे साफल्यं कुतो लप्स्यते। यतो हि रामायणायोध्याकाण्ड उक्तम्— "मृदुर्हि परिभूयते"— अशक्तः सर्वत्र तिरस्क्रियते। अतो बलमाधाय वीरसैनिकैर्भाव्यम्। बलवति सति दैवं नोपासनीयम्। यतोहि— "दैवं हि दैवमिति कापुरुषा वदन्ति"। वीरास्तावत्— "वीराः सम्भावितात्मानो न दैवं पर्य्युपासते"। इति रामायणोक्तेरनुकूलं दैवं नाश्रयन्ते। स्वावलम्बिना वीरा ईश्वरकृपया पुरुषार्थद्वारा ह्यापत्स्वपि न बिभ्यति, अपितु विजयन्ते। अतः सर्वैर्वीरैर्भूत्वा परतन्त्रजन्मभूमेः स्वातन्त्र्याय तनुमनधनान्यर्पणीयानि। जगद्वन्द्यो जगदीशो देशवासिनो महोच्चोद्देशसिद्ध्यर्थं बुद्धिबलादिकं प्रयच्छत्वित्यलम्।

# विवाह वयो विमर्शः

(पूर्वतोऽनुवर्तते)

[ले पं० दीनानाथ शास्त्री मुलतानस्थः]



य एव पाठः श्रीमता बौधायनस्य उद्धृतः, स एव आपस्तम्बगृह्यसूत्रस्य ३। ८। ७-८-१० इति पटल-खण्ड-सूत्रेष्वपि

प्राप्यते । तत्र 'शेषं समावेशने जपेत्' आप० ३ । ८ १० 'अन्यो वैनामाभिमन्त्रयेत्' आप० ३ । ८ । ११ अयं पाठः प्राप्यते, अत्राऽपि चतुर्थ्यां पररात्रे समावेशनम्, तत्र वध्वाः स्वापनमात्रमेव, न तु मैथुनम । यदि तत्र मैथुनमभीष्टमभविष्यत्, तर्हि तस्मिन् काल वध्वा अभिमन्त्रणाऽर्थम् अन्यस्य वधूसमीपस्थितिः कथमिवाऽभविष्यत् . तेन स्पष्टम्, यच्चतुर्थ्यामपररात्रे‡वध्वाश्शयनाऽभिनयमात्रमेवाऽभीष्टम्, आपस्तम्बस्य बौधायनस्याऽपि च मते; नतु मैथुनाऽर्थं शयनम् । तेन सुदर्शनाचार्य्यस्य 'समावेशनं च वध्वा सह मैथुनाऽर्थं शयनम्' अत्रत्यं 'मैथुनाऽर्थम्' इतिपदं चिन्त्यम् भ्रममूलकञ्च । तत्र 'वध्वा सह शयनम्' इत्येव प्रकृतम् । इदन्त्वयत्वेऽपि सर्व्वेषां समक्षं क्रियते, केचित्तत्करणेऽपि वधूवरयोर्लज्जां ज्ञात्वा तयोश्शिरोमात्रमेव मिथो मलयन्तीत्याचारभेदो जातोऽद्यत्वे ।

अधुनाऽयं प्रश्नोऽवशिष्यते, यद्— बौधायनमते आपस्तम्बमते । च मैथुनाऽर्थं शयनसमयः को निर्दिष्टः, तत्र पाठैरवधेयम् तदग्र एवाऽयं पाठः— 'यदा मलवद्—वासाः स्याद् अथैनांब्राह्मणप्रतिषिद्धानि कर्म्माणि संशास्ति 'यां मलवद्वाससम्' इत्येतानि, आप० ३ । ८ । १२ 'रजसः प्रादुर्भावात् स्नाताम् ऋतुसमावेशने उत्तराभिः ('विष्णुर्योनिं कल्पयतु' इत्यादिभिः १३ ऋग्भिः) अभिमन्त्रयते' ३ । ८ । १३ । अनेन स्पष्टम्, यद्— गृह्यसूत्राणां मतेन विवाह ऋतुकालात् पूर्व्वं भवति; ततो द्वादशवर्षावस्था सिद्धा । मैथुनञ्च विवाहचतुर्थरात्र्यां नैव विहितम्, किन्तु चतुर्थ पररात्रे विधीयमाने चतुर्थीकर्म्मणि एकत्र सर्व्वेषां समक्षे (दृश्यतां सायणभाष्ये कौशिकसूत्रम्, यत्र वस्त्रावरणमात्रं निर्दिष्टम्) शयनाऽभिनयमात्रमेव । मैथुनन्तु ऋतुकाले जाते तत्स्नानोत्तरमेवाऽनुशिष्टम्; तदैव 'विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि

‡ यथा-'पुत्रस्त एषः' अ. १४ । २ । २४ इति वध्वा अंकेऽन्यस्य पुत्रं स्थापयित्वा 'पुत्रस्त एषः' इत्यभिनयमात्रं [illegible] क्रियते ।

पिंशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते' ऋ० १० । १८४ । १ 'गर्भं धेहि' १० । १८४ । २ इत्यादि गर्भाऽर्थाऽऽशी र्देवतात्मकानां गृह्यसूत्रेणैवाऽत्र विनियुक्तानां मन्त्राणां सफलता। पूर्वोक्तभवन्निर्दिष्ट--समावेशने नैषां गर्भाधानमन्त्राणां पाठः, इति स्वयमेवाऽत्र निर्णीतत्वमवलम्बनीयम् । गर्भाधानार्थं मैथुने गर्भाधानसंस्कारे इमा एव ऋचः पठ्यन्ते– इति स्वसंस्करविधिरपि दृश्यताम् । अग्रे पुनर्विशदयति आपस्तम्बगृह्यसूत्रकारः – 'चतुर्थीप्रभृत्याषोडशीमुत्तरामुत्तरां युग्मां प्रजानिः श्रेयसम् ऋतुगमने इत्युपदिशन्ति' आप० ३ । ६ । १ ।

पूर्वोक्तोऽयञ्च पाठो बौधायनेऽपि द्रष्टव्यः, यतः कृष्णयजुर्वेदस्य (८६) शाखासु तैत्तिरीयसंहिताया द्वयोर्भेदयोर्या काण्डिकेयी वर्तते, तस्याः पञ्चभेदेषु प्रथमाऽऽपस्तम्बीशाखा, द्वितीया बौधायनी, तृतीया सत्याषाढी. तुरीया हिरण्यकेशी, पञ्चमी च औखेयी, इति । एतन्नाम्नैव च गृह्यसूत्राणि, तेषां प्रायः समान एव विधिः, क्वचिदेव भेदः । यद्येवं तर्हि बौधायनाऽऽपस्तम्ब-हिरण्यकेशि-प्रभृतिगृह्यसूत्रेषु प्राङ् निर्दिष्टेषु पारस्कर–गोभिलादिषु च ऋतुकालात् पूर्वमेव विवाहः, चतुर्थ्यपररात्रे चतुर्थिकाकर्म्म. तत्र शयनाऽभिनयः, ऋतुकाले च समागते मैथुनाऽर्थं शयनं सिद्धम्, तेन चाऽस्मत्पक्षः पुष्टो जातः ।

'यथालिङ्गं समीक्ष्य मिथः' अत्र न ज्ञायते—स्नातकमहोदयेन विशिष्टरेखा कुतो दत्ता? मिथः समीक्षणन्तु विवाहसंस्कारेऽपि भवति का नाम चतुर्थीकर्म्मणि तद्विशेषता ? । अथ च 'पुत्रकाम' 'युवतिर्वभूयाः' 'पुत्रकामे' इति रेखाङ्कितानामृचां तत्र जपनमात्रमेवाऽभीष्टम् ; तर्हि रेखाभिः का सिद्धिर्जाता, इति तु भाविकृते आशीर्वादाः । यच्च 'उप मामुच्चा युवतिर्वभूयाः प्रजायस्व प्रजया पुत्रकामे' अत्र श्रीमता रेखा दत्ता, तत्र न किमपि भवदिष्टं सिद्धयति, यतोऽत्र ... ... ... ... निर्दिष्टम्, किन्तु 'युवति-

र्बभूयाः' इति वैदिकाशीर्लिङा तस्यै आशीर्दत्ता । आशीश्चाऽभूत-वस्तुनः कृते भविष्यत्कृते च भवति, एतेन प्रतीयते यत्—सा विवाहकाले युवतिर्नाऽऽसीत्, अत एव भविष्यति तच्छीघ्रताकृते आशीः समर्प्यते, एतदर्थमेव चाऽथर्ववेदे वधूकृते 'मा हिंसिष्टं कुमार्यं' अ० १४ । १ । ६३ इति प्रथमवयोवाचकः 'कुमारी' शब्दः प्रयुक्तः, कौशिकसूत्रे तु बहुत्र । 'एवं प्रजायस्व प्रजया' अत्राऽप्याशीर्वादे लोट्, तथाच—'आशिषि लिङ्लोटौ' ३ । ३ । १७३ । तेनाऽत्राऽप्यस्मत्पक्षस्यैव प्राबल्यम् ॥ अथवा कस्मिँश्चिद् विवाहमन्त्रे 'युवति' शब्दोऽपि समागच्छेत्; तर्हि तस्य विनियोगो यौवनाऽवस्थायामेव भवेदित्यावश्यकं नाऽस्ति, तत्र भावियौवनमेव मन्यते, तथा च— 'युवा सुवासाः परिवीत आगात्' इति ऋग् भवतां स्वामिनाऽपि उपनेयबालककृते उपनयनसंस्कारे वेदारम्भे च गृह्यसूत्राऽनुसारं पठ्यते । उपनयनञ्च द्विजमात्रस्य भवतीति भवत्स्वामिनोऽपि सम्मतम् । तत्र गर्भाष्टमे ब्राह्मणस्य, गर्भैकादशे क्षत्रियस्य, गर्भद्वादशे च वैश्यस्योपनयनं भवत्स्वामिनोऽप्यभीष्टम् । श्रीमतोऽपि च सकलगृह्यसूत्रसंवादाद् गृह्यसूत्रगृह्यत्वाच्चाऽभीष्टं भविष्यति, अधुना वाच्यम्— किमियमवस्था ८ ११-१२ यौवनस्य? । यदि न, तर्हि यथा 'युवा' इति लघ्ववस्थाकबालककृतेऽपि प्रयुक्तो विनियुक्ते मन्त्रे, तेन च तस्य वर्त्तमाने युवत्वं नाऽभीष्टम्भवति, किन्तु भावि, तथैव विवाहकालेऽपि सकलगृह्यसूत्राणां स्मृतीनाञ्च ऋतुकालपूर्वताऽऽख्यानसंवादात् क्वचिद्विनियुक्ते मन्त्रे युवतिपद-समागमनेऽपि ऋतुकालपूर्वनियत-विवाहकालत्वाद् भाव्यभिप्रायेण न कोऽपि दोषाऽऽपातो जायते । तेन उक्तचरकारणाद् 'युवतिर्बभूयाः' इत्यत्रत्य 'युवति' पदस्य 'बभूयाः' इत्याशीर्लिङा भविष्यदाशीर्वादवचनत्वाच्च— 'किं द्वादशवर्षीया विवाहसंस्काराच्चतुर्थ्यां निशायां युवतिः सञ्जायते' इति विद्यावाचस्पतिमहाशयस्य तर्कः कृत्तो भवति ।

विवाहसंस्काराच्चतुर्थनिशायामेव गर्भाधानं क्वाऽपि नाऽनुज्ञायमानम्, किन्तु ऋतुकालस्य चतुर्थनिशायाम्, विवाहाच्चतुर्थ्याऽपररात्रे तु चतुर्थीकर्म्मविशेषो भवति। अत एव भवदाचार्येण स्वसंस्कारविधौ गर्भाधानसंस्कारे 'अथ गर्भाधान ॐ स्त्रियाः पुष्पवत्याश्चतुरहादूर्ध्व ॐ स्नात्वा विरुजायास्तस्मिन्नेव दिवा 'आदित्यं गर्भमिति' वचनं पारस्करगृह्यसूत्रस्य वचनत्वेनोक्तम्, एतस्यैव चाऽनुमोदनं गोभिलगृह्यसूत्रशौनकगृह्यसूत्रेष्वपि च तेन मतम्, तेन पुष्पवत्याश्चतुरहादूर्ध्वं गर्भाधानं सिद्धम्' नतु विवाहचतुर्थनिशायाम् तन भवत्पक्षो हतः।

अथ च 'चतुर्थनिशायामेव गर्भाधानस्याऽनुज्ञायमानत्वाद्' इति भवदीयवचने 'एव' शब्दः कस्याऽपि न सम्मतः प्रत्युत श्रीमद्वचनादपि विरुद्धः, यतः— श्रीमताऽमुष्य लेखस्य २२ पृष्ठे 'किन्तु तयोः कालेऽन्तरं साधारण्येन कतिपयदिवसानां विशिष्टाऽवस्थायां कतिपयमासानाम्' इति कतिपयमासा अप्युभयसंस्कारयोरन्तरे निरूपिताः, येन 'एव' शब्दो निराक्रियतेऽस्मत्पक्षश्च सिध्यति।

'विवाहचतुर्थरात्र्यामेव गर्भाधानम्' अत्र श्रीमता कोऽपि वेदमन्त्रो न दत्तः, किमत्र श्रीमानपि स्वशब्देन पौराणिकः संवृत्तो यद्— गृह्यसूत्राणां स्वतः प्रामाण्यममंस्त, अथवा— भवन्तो यस्मिन् पुस्तकेऽकम्पाऽनुकम्पादृशं प्रक्षिपन्तु तदेव वैदिकम्भवति?॥ अथच 'विवाहचतुर्थ्यां निशायां गर्भाधानम्' इति सर्व्वथाऽयुक्तम्। भवदुद्धृत 'बौधायन' प्रमाणेऽपि चतुर्थीकर्म रात्र्यां न निर्दिष्टम्, किन्तु 'चतुर्थ्यां पररात्रे' 'पररात्रे' इत्यस्याऽर्थो रात्रेः पश्चिमे भागे ब्राह्ममुहूर्त्ते इत्यर्थः। तस्मिन्समये चतुर्थीकर्म्मणि अग्नेरुपसमाधानादारभ्य आज्यभागपर्यन्तं पूर्व्वं कार्य्यं कर्त्तव्यं भवति, ततश्च जपाहोमादि परिषेचनपर्य्यन्तं कर्म्म करणीयं भवति, एतस्मिन् समये प्रातःकालो जायमानो भवति, किं तस्मिन्

प्रातःसमये श्रीमान् वरवध्वौ मैथुनाऽर्थमादिशति? धन्यः श्रीमान्! स्वस्वामिनः संस्कारविधौ गर्भाधानसंस्कारे लिखिता टिप्पणी स्मर्त्तव्या—'दिन में ऋतुदानका निषेध है' 'गर्भाधानक्रिया का समय प्रहर रात्रि के गये पश्चात् प्रहररात्रि रहे तक है'। परमिदं चतुर्थीकृत्यन्तु पश्चिमाद् यामात् प्रारभ्यत एव तत्समाप्तौ च दिनं जायमानमेव भवति; कुतस्तदा ‡ सम्भव—सम्भवः? ॥ 'चतुर्थनिशायामेव' अत्र 'एव' कारं तु श्रीमानपि न वक्तुं शक्तः 'पर्ववर्ज्जं 'व्रजेच्चैनाम्' मनु० ३। ४५ 'अमावस्यामष्टमीञ्च पौर्णमासीं चतुर्दशीम्। ब्रह्मचारी भवेन्नित्यम्' मनु० ४। १२८ इत्यादि—स्व— संस्कारविधिधृत—टीकित-प्रमाणाऽनुसारं चतुर्थ्यां रात्र्यामपि पर्वादिसमागमने मैथुनं त्याज्यं भविष्यति, 'अथवा उसदिन (विवाहवाले दिन) ऋतुकाल न हो, तो किसी दूसरे दिन गर्भस्थापन करे' इति विवाहसंस्कारान्तलिखित-स्वाचार्य्याज्ञयनुसारं चतुर्थदिवसे ऋतुकालाऽभावेन च सा रात्रिस्त्यक्तव्या भविष्यति। तेन 'एव' कारो न समञ्जसः यदि क्वचित् 'चतुर्थनिशायामेव' इति पाठोऽपि भवेत्, तस्याऽपि नाऽयमर्थो यत्- चतुर्थरात्र्यामवश्यं मैथुनं कुर्य्यादिति, किन्त्वयमर्थः— यदि 'यथाकामी वा कामसाविजनितोः सम्भवामे, ति वचनात्' पार० १। ११। ८ इत्यनृतुकालेऽपि मैथुनेच्छा उदियात्; तर्हि पञ्चमरात्र्यामेव कुर्य्यान्न पूर्वत्रिरात्रे; यतश्चतुर्थीकर्म्मण ✱ प्राक् तस्या भार्य्यात्वमेव न भवति, चतुर्थदिवसस्य च पश्चिमरात्रे चतुर्थीकर्म्म कार्य्यं भवति ततः प्रातः कालो भवति; ततः पञ्चमरात्रौ मैथुनं कुर्य्यात्, तदाऽपि तत्र मैथुनमावश्यकत्वेन न निर्द्दिष्टम्, अत एव पारस्कर-गृह्यसूत्रस्य हरिहरभाष्य लिखितम्— "संवत्सरं–वर्षं यावत् मिथुनं-अभिगमनं नोपेयाताम्, अथवा द्वादशरात्रम्, अथवा षड्रात्रम्, यद्वा त्रिरात्रम् अन्ततः। संवत्सरादिपक्षाणामन्ते त्रिरात्रमित्यर्थः।

‡ 'प्राणं वा एते प्रस्कन्दन्ति, ये दिवा रत्या संयुज्यन्ते, प्रश्नोपनि० १। १३।

संवत्सरादिविकल्पास्तु शक्त्यपेक्षया व्यवस्थिता ज्ञेयाः । संवत्सरादिपक्षाऽशक्तौ त्रिरात्रपक्षाश्रयणेऽपि चतुर्थीकर्म्मानन्तरं पञ्चम्यादिरात्रावभिगमनम्; चतुर्थीकर्म्मणः प्राक् तस्या भार्य्यात्वमेव न संवृत्तम्, विवाहैकदेशत्वाच्चतुर्थीकर्म्मण इति"। एवमन्यत्राऽपि स्मर्यते- 'आप्रदानाद् भवेत्कन्या प्रदानाऽनन्तरं वधूः । पाणिग्रहे तु पत्नी स्याद् भार्य्या चातुर्थकर्म्मणि'। तेन स्वनिवेशितेन 'एव' कारेण न भवत्पक्षसिद्धिः ।

एतावता विस्तृतविवेचनेन सिद्धम्, यद्- विवाहसंस्कारो द्वादशवर्षाऽवस्थायां गर्भाधानञ्च यौवने- इत्यस्य भाव ऋतुकाले; अत एव तौ संस्कारौ भिन्नौ भिन्नकालिकौ च- इति प्रमाणोपपत्तिभिः परिपुष्टं जातम्, नाऽमुं सनातनपक्षं कोऽपि निराकर्त्तुमलम्भूष्णुः ।

'यदा सा उशती भवति, सा गर्भाधानाऽवस्था' इति मदुद्धरणे श्रीमान् 'यत्परः शब्दः स शब्दार्थः' इति न्यायमुपेत्य मत्पक्षमधिक्षिपति । 'अल्पवयस्कानामपि विवाहानन्तरं साऽवस्थाऽपि [ शेपः प्रहारादिका ] क्रमश एत्येव, यदा सा उशती भवति' अत्र मद्वाक्ये 'उशती' त्यस्य 'शेपः प्रहारमुशती' इत्यत्रैव तात्पर्य्यम्— इति स्पष्टम्, नतु सामान्यकामनामात्रम्, तर्हि 'उशतीः कन्यका इमाः पितृलोकात् पतिं यतीः' अ० १४।२।५२ अनेन मन्त्रेण न कोऽपि विरोधः, अत्र साधारणकामनाऽभिमता । शेपः प्रहारकामनायामपि वा द्वादशवर्षविवाहे को विरोधो जातः, तस्यः कामनाया भावित्वात् 'प्रहराम शेपम्' ऋ० १०।८५।३७ इति मन्त्रस्थवर्णनवद्, न तात्कालिकता । अथ च शेपः-प्रहारादिवचनस्याऽधिकवयस्कत्वेऽप्यश्लीलता मता श्रीमता 'अप्रतिषिद्धमनुमतम्' ।

'एयमगन् पतिकामा' अ० २।३०।५ अत्र द्वादशवर्षत्वेऽपि मम पतिकामात्वयुक्तिमप्रत्याचक्षाणः श्रीमानुपहासमात्र-

मपदिशति; परमेतेन भवत्पक्षमात्रं कुतः सिद्धम ?। भवानेतेन यदि यौवने कन्याविवाहं साधयति; तन्मन्दम्– यौवनं श्रीमान् १७ वर्षात् २४ वर्षपर्य्यन्तमनुमनुते; तर्ह्येतद् वाच्यम्– षोडशवर्षाः, पञ्चदशवर्षाश्चतुर्दशवर्षास्त्रयोदशवर्षा द्वादशवर्षा वाऽपि स्त्रियः पतिमिच्छन्ति नो वा ?। यदि न; तर्हि प्रत्यक्षाऽपलापोऽयम्, एकादशद्वादशवर्षीयाणामपि सन्ततयो दृष्टाः, किम्पुनस्त्रयोदशचतुर्दशवर्षाणाम्। यद्युक्तवर्षेष्वपि ताः पतिमिच्छन्ति; तर्ह्युक्तमन्त्रः १७–२४ वर्षमात्रविवाहनिर्देष्टा न सिद्धोऽभूत्, ततश्च वेदाऽविरोधात् स्मृतीनां द्वादशवर्षाविवाहो नियमितोऽभूत्।

श्रीमान् 'सविताऽददात्' ऋ० १० । ८५ । ९ इति कन्यादाने मयोद्धृतं वेदबीजं दृष्ट्वा परमप्रसन्नः सन् ममाऽपरिहार्य्यं परस्परविरोधममंस्त । प्रसन्नताऽऽविष्टः श्रीमान् मम वाक्ये प्रणिधानदानमपि व्यस्मार्षीत् । धैर्य्येण मद्वाक्यसिद्धान्तमननं करोतु श्रीमान्, तत्र मयेदं लिखितम्, "यदि चेयं देवता सिद्धा वेदाङ्गाद् व्याकरणाद् वेदे च देवमनुष्ययोर्भेदो मतः; तर्हि दैवी सर्व्वा मर्य्यादा मनुष्येषु न प्रवर्त्तितुं शक्यते– इति मन्तव्यं भविष्यति, भिन्न योनिमत्त्वात् । देवास्तु नित्यतरुणा भवन्ति, तथा च– 'न वो अस्त्यर्भको देवासो न कुमारकः । विश्वे सन्तो महान्त इत्' ऋ० ८ । ३० । १ 'युवाना रुद्रा अजराः' ऋ० १ । ६४ । ३ इत्यादि । तत्र यदि यौवनविवाहो दृष्टोऽपि, न तत्र किमपि वैलक्षण्यम्" इति । अस्मिन्नंशे उत्तरांशस्तु विद्यावाचस्पतिमहाशयेन स्पृष्ट एव न । पूर्व्वांशेऽप्यमुना महाभागेन 'दैवी सर्व्वा मर्य्यादा' इति मम वाक्ये 'सर्व्वा' शब्दो न दृष्टः। भिन्नयोनीनां मर्य्यादाः सर्व्वास्त्यक्तव्या न भवन्ति, न च सर्व्वा अनुकर्त्तव्याः, तत्र धर्म्मशास्त्रमेव प्रमाणीकर्त्तव्यं भवति । काश्चिन्मर्य्यादास्तु मनुष्ययोन्यां पशुपक्षियोन्या अप्यनुकर्त्तव्या भवन्ति, यथा– मैथुनम्, एवमन्या अपि, अत्र चाणक्यनीतिर्द्रष्टव्या; तर्हि

'सविताऽददात्' ऋ० १० । ८५ । ६ इति सूर्य्यामन्त्रोद्धरणे पितृकर्त्तृकदानस्य धर्म्मशास्त्रसम्मतत्वात् सा मर्य्यादा ग्रहीतव्या भवति, न सर्व्वा, यतो देवयोन्यां यौवनस्याऽव्यभिचाराद् मनुष्ययोन्याञ्च तद्— व्यभिचाराद्धर्मशास्त्रसम्मतमेव कन्याविवाहाऽऽयुर्मन्तव्यं भवतिः तर्हि को मम परस्परविरोधो विद्यावाचस्पतिना दृष्टः ? । तर्हि मल्लिखित 'सर्व्वा' शब्दे जगन्निमीलिकां विदधत् स्नातकमहोदय एवोपहासास्पदं जातः । अथ च— 'सूर्य्यां यत् पत्ये शंसन्तीं मनसा' ऋ० १० । ८५ । ६ अत्र श्रीमता 'पतिं कामयमानां पर्य्याप्तयौवनाम्' इत्यर्थ एव कुतो मतः ? । यदि सायणवाक्यात् ; तर्हि किं सायणः श्रीमत्सम्प्रदायस्याऽऽधारस्तम्भः ? श्रीमता च सायणभाष्ये स्वाऽश्रद्धाऽपि प्रकटिता गतलेखे; तर्ह्यत्र परस्परविरोधः कथं कृतस्तन्मत्वा ? । मया तु प्रागेव निवेदितम्, यत्— सायणो देवयोनिसत्तापक्षपाती, अत एव तेन सूर्य्याया यौवनं निर्दिष्टम्, परं श्रीमता 'शंसन्तीम्' इत्यस्य 'पत्ये कामयमानां पर्य्याप्तयौवनामित्यर्थः कुतः कृतः ? । किं शंसुँ-धातुः कामनार्थे यौवनाऽर्थे वा वर्त्तते ? नहि । दृश्यतां धातुपाठः— 'शंसुँ स्तुतौ' [भ्वा० प० से० स०] इति स्तुत्यर्थे भवति नतु कामनाऽर्थे; इच्छाऽर्थे तु 'आङः शसिँ इच्छायाम्' (भ्वा० आ० से० स०) इत्याङ्पूर्व्वः शसिँधातुर्भवति, सचाऽनुदात्तेत्वादात्मनेपदी; मन्त्रे तु न आङ्पूर्व्वः शसिः, नचाऽऽत्मनेपदमूलकश्शानच्, किन्तु अङ्रहितः परस्मैपदत्वाच्च शत्रन्तः शंसतिरेव, तेन तत्र स्तुतिपरामित्यर्थः । यदि ममाऽर्थे विश्वासो न भवेत् ; तर्हि स्वाचार्य्यस्य संस्कारविधौ गृहाश्रमप्रकरणे उक्तमन्त्रांशस्याऽर्थो द्रष्टव्यः— 'मन से गुणकीर्तनकरने वाली वधू है उसको पुरुष...... सकल जगत् का उत्पादक परमात्मा देता है अर्थात्— बडे भाग्य से दोनों स्त्रीपुरुषों का जोकि तुल्यगुणकर्म्मस्वभाव हों, जोड़ी मिलता है' पृ० १६८ अधुना क गतोऽसौ श्रीमतः कामनाऽर्थो

यौवनार्थश्च ? । आर्य्यसामाजिकत्वेन स्वकीयस्य पं० राजारामशास्त्रिणोऽप्यत्राऽर्थः श्रोतव्यः– 'सोम वधूका चाहने वालाथा, दोनों अश्वि वरने वालेथे, जब सविता ने मनसे प्रशंसा करती हुई सूर्या को पति के लिये दिया, अ० १४ । १ । ६ आशासे— भविष्यति विनैव विचारं श्रीमानेवं साहसिक्यं न स्वीकरिष्यति ।

'सविता कन्यापिता विधिरूपेण विवाहसंस्काराऽवसरे दानं चकारेति सुव्यक्तम्' इति स्ववाक्ये लिटं प्रयुञ्जानः श्रीमान् वेदे परोक्षभूतेतिहासममंस्तैव । 'पत्ये शंसन्तीम्' इत्यत्र न परस्पराऽभिलषितता– इति साधितपूर्व्वम् ।

'एयमगन् पतिकामा जनिकामोऽहमागमम् ।' इत्यपि विवाहालये उपवेशितयोरुभयोरेव कृते; नाऽत्र परस्पराऽभिलषितता स्वातन्त्र्येण । मनुमुनिर्व्वक्ति– 'देव–दत्तां पतिर्भार्य्यां विन्दते ने–च्छयाऽऽत्मनः' ९ । ९५ एतेन सिद्ध्यति, यत्– पतिः स्वेच्छया जनिकामो न भवति; किन्तु– 'अदादग्निर्मह्यमथो इमाम्' ऋ० १० । ८५ । ४१ इति वेदसंवादाद् अग्निदेव— दत्तत्वेन पत्नीं विन्दते, सा चाऽवस्था द्वादशवर्षे मनुना ९ । ९४ स्वीकृता, तेन च न भवदिष्टसिद्धिः । अथच— 'अस्वतन्त्राः स्त्रियः कार्य्याः' मनु० ९ । २ 'न स्त्री स्वातन्त्र्यमर्हति' ९ । ३ 'न भजेत् स्त्री स्वतन्त्रताम्' ५ । १४८ 'बालया वा युवत्या वा......न स्वातन्त्र्येण कर्त्तव्यं किञ्चित्कार्य्यं' मनु० ५ । १४७ । 'न स्वातन्त्र्यं स्त्रियाः क्वचित्' याज्ञ० विवा० आचारा० ८५, 'नास्ति स्वतन्त्रता स्त्रीणां' महाभार० अनुशा० २० । १४ 'नास्ति त्रिलोके काचित् स्त्री या वै स्वातन्त्र्यमर्हति' महाभा० अनुशा० २० । २० इति स्मृतिरितिहासश्चाऽपि स्त्रियाः स्वातन्त्र्यं निषेधति । वेदोऽपि च तथा स्वीकुरुते, तथा च— 'इन्द्रश्चिद् घः ? तदब्रवीत्– स्त्रिया अशास्यं मनः' ऋ० ८ । ३३ । १७ 'न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता' ऋ० १० ९५ । १५

'न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणा ँ हृदयान्येतेति— मैतदादृथाः, न वै स्त्रैण ँ सख्यमस्ति' शतपथ० ११। ५।१।६ एतदनुवाद एव पुराणे— 'क्वाऽपि सख्यं न वै स्त्रीणां वृकाणां हृदयं यथा' भागवत० ६।१४।३६ इत्यादि-वेद—स्मृति—पुराण—प्रमाणैः स्त्रियाः स्वातन्त्र्यं सर्व्वथा निषिद्धम्, अत एव सा यत् 'पतिकामा' भवति, तत्र 'यस्मै दद्यात् पिता त्वेनाम्' मनु० ५।१५१ इत्यनुसारं पितृदत्तस्य पत्युरेव-कामुका भवति, न तु तस्याः स्वातन्त्र्यम्, इति वेदमूला व्यवस्थोक्तमन्त्रोदाहरणात्। श्रीयास्कोऽपि कन्याया दानविक्रयाऽतिसर्गनिदर्शनात्' नि० ३।४।३ 'कन्या- केयं नेतव्या' नि० ४, १५।१ इति गतलेखे मन्निर्दिष्ट-भवदस्पृष्टवचनाच्च तस्याः स्पष्टं पारतन्त्र्यं मनुते। यदि तन्मते तस्याः स्वतन्त्र्यमभविष्यत्; तर्हि तु सा स्वयमेव वरमन्वेष्टुं शक्ताऽऽसीत्; तदा 'केयं नेतव्या' इति पितुश्चिन्ता व्यर्थाऽभविष्यत्। सा सुरूपं गुरुकुलाच्च स्नात्वाऽऽगतं चिराऽदृष्टं पितृव्यपुत्रमेव कामयेत; तत्र भवन्तस्तस्या इच्छापूर्त्तिं विधास्यन्ति नो वा? यदि न, तर्हि श्रीमद्भिरपि सा पारतन्त्र्यं कथं नीता? तर्हि स्वातन्त्र्यं नाम किम्? 'पौंश्चल्याच्चलचित्ताच्च नैःस्नेह्याच्च स्वभावतः' मनु० ६।१५ इति चलचित्तत्वादेव तु तासां स्वातन्त्र्यमपहृतं वेदेन स्मृतिभिश्च; तर्हि कथं; तासां स्वातन्त्र्यम्भवेत्?। तेन 'पतिकामा' इत्यत्राऽस्मदुक्ता समूला व्यवस्थैव ज्यायसी। 'पतिकामा' यदा १२-१३ वर्षेऽपि भवति; तर्हि यौवनविवाहपक्षः श्रीमतां खण्डितो जातः, कामनायां १७ वर्षावस्था कारणं न भवति, किन्तु ऋतुमतीत्वम्, इति प्रागायुर्व्वेदमतं प्रतिपादितम, विवाहश्च तन्निकटकाले द्वादशवर्षे निर्दिष्ट एवेति नाऽस्मत्पक्षहानिः। पतिकामता तु २५-३० वर्षेऽपि भवति। तर्हि किं २५-३० वर्षाविवाहोऽपि वेदस्य भवतो वा सम्मतो भविष्यति?। महाभारते आनुशासनिके वृद्धस्त्रिया अपि कामवत्त्वं

प्रदर्शितम्, तर्हि पतिकामात्वस्य वार्द्धक्येऽपि सत्वाच्छ्रीमन्मते वृद्धाविवाहेऽपि वैदिकः सेत्स्यति 'पतिकामा' पदेन? । दृश्यतां 'महाभारत' स्य तदुपाख्यानम्, येन ४ । १ संख्यायां श्रीमता वृद्धाया अपि कन्यात्वं निर्दिष्टमासीत् । तेन तत्राऽस्मदीयव्याख्यानं समूलकमेव । चतुर्थ—परात्रे [नतु 'निशायाम] 'पुत्रकामे' इत्यादि—मन्त्रोच्चारणमात्रेण मैथुनं न सिद्ध्यति—इति प्रागसीषधाम; अन्यथा 'प्रजां प्रजनयावहै पुत्रान् विन्दावहै बहून्' इति विवाहकालेऽपि पठनवशात् तत्कालेऽपि मैथुनं स्वीकर्त्तव्यं भविष्यति, परं श्रीमतोऽप्यनिष्टमेतत् । तेन तत्र 'पुत्रकामे'ति भावीच्छामात्रमेव ।

अथ च पिता दानक्रियायाः कर्त्ता भवति कन्या च कर्म्म— इति वेद—सकलगृह्यसूत्र-स्मृति-प्रभृतिसंवादाच्छ्रीमानपि मंस्यते; तर्हि देयं वस्तु स्वतन्त्रं न भवति— इति मन्तव्यं भविष्यति श्रीमता । यत्तु- 'कोऽदात् कस्मा अदात्, कामोऽदात् कामायाऽदात्' य० ७ । ४८ इति मन्त्र उपन्यस्तः श्रीमता, स प्रयासमात्रफलकः । अत्र दातुः ‡प्रीतग्रहीतुश्चैव कामरूपत्वं कथितम्, नतु देयवस्तुनः । एतदपि कथनं प्रदातुर्दानाऽभिमानाऽभावाय प्रतिग्रहीतुश्च प्रतिग्रहदोषाऽभावाय च कामस्तुतिमात्रम्, नत्वत्र कन्याकर्तृककामना काऽपि दर्शिता । एष मन्त्रो गृह्यसूत्राणां मूले न दृष्टः, पारस्करस्य टीकायां दृष्टोऽपि न भवदुक्तप्रकारेण विनियुक्तः, अधुना भवान् प्रयोगपारिजातमपि स्वतः प्रमाणममंस्त, धन्या भवन्तः, भवन्तो यस्मिन् स्वाचार्य्येणाऽप्यमते पुस्तकेऽनुग्रहदृशं प्रक्षिपेयुः, तत् सपद्येव वैदिकं जायते । वेदेऽस्य भिन्ना विनियोगः । विनियोगविषये मन्त्रार्थविषये विवेकोऽस्माभिः प्राक् कृतएव ।

पिता कन्याया दानं करोति- इति 'यस्मै दद्यात् पिता

‡ प्रतिग्रहीतुः । [illegible] ।

त्वेनाम' मनु० ५ । १५१ इति मनुवाक्येन, 'सविताऽददात्' ऋ० १० । ८५ । ६ (सविता सूर्य्यायाः पिताऽऽसीत्) इति वेदवाक्यध्वनिना, 'पित्रा प्रत्तामादाय' १ । ४ । १५ इति पारस्करगृह्यसूत्रेण' 'यां यामयेत दुहितरं प्रियास्यादिति तां निष्ट्यायां (स्वातौ) दद्यात्' आपस्त १ । ३ । ३ स्वगृह्यसूत्रेण, 'अलङ्कृत्य कन्यामुदकपूर्वां दद्यात्' १ । ६ । १ इत्याश्वलायनगृह्यसूत्रेण, विवाहभेदलक्षणव्याख्यायाम् 'अमुकगोत्रोत्पन्नामिमाममुकनाम्नामलङ्कृतां कन्यां प्रतिगृह्णातु भवान्' इति १३५ पृष्ठे 'संस्कारविधौ' कन्यादानसङ्कल्पकरणात् स्वा० दयानन्देन, 'पितृकर्त्तृकं कन्यादानन्तु वैधम्' इति 'श्रीः' पत्रस्य ४ । ४ संख्यायाः २५ पृष्ठे श्रीमता च स्वीकृतम् ॥ कर्त्ता देयवस्तुनो दानं कर्त्तुं तदा प्रभुरधिकृतो वा, यदा तस्य स्वामी स्याद् इति सर्व्वैरेव मन्तव्य भविष्यति । पितुः कन्यायां स्वामित्वन्तु ऋतुकालात् पूर्व्वं भवति; नतु कन्याया ऋतुमतीत्वे जाते, तथा च मनुः- 'पित्रे न दद्याच्छुल्कन्तु कन्यामृतुमतीं हरन् । स हि स्वाम्यादतिक्रामेद् ऋतूनां प्रतिरोधनात्' ९ । ९३ । एतेन स्पष्टं सिद्ध्यति यद्- ऋतुमतीत्वे जाते पितुः कन्यायां स्वामित्वं न भवति' अत एवाऽऽपत्काले ऋतुमतीत्वे जाते पितृकर्तृकं दानं न निर्द्दिष्टम, किन्तु 'विन्देत सदृशं पतिम्... कुमार्यृतुमती सती' म० ९ । ९० इत्येतावन्मात्रमेव; परमापदोऽन्यत्रैतस्य निन्द्यता प्रतिपादिता । फलतो यदि तस्य [पितुः] तस्यां (ऋतुमतीकन्यायां) स्वामित्वं न, तर्हि स कथं तस्या दानं कर्त्तुं शक्तः? । यदि च दानंऽकर्त्तुं न शक्तः; तर्हि तस्याः कुतो वैधो विवाहः, यतः 'प्रदानं स्वाम्यकारणम' म० ५ । १५२ इति विवाहभेदलक्षणेषु मनुस्मृतिप्रभृतिस्मृतिषु, आश्वलायनप्रभृतिगृह्यसूत्रेषु च द्रष्टव्यम् । अत एव तु मनुना उक्तवरश्लोकस्याऽनन्तर एव श्लोके ऋतुकालात् पूर्व्वमेव तस्याः पितुः स्वामित्वं एवं हृद्यां द्वादशवार्षिकीम् ९ । ९४ इति

कन्याविवाहवयो निर्दिष्टम्, तेनाऽस्मत्पक्षसिद्धिः ।

किञ्च— 'अलङ्कृत्य सुतादानं' मनु० ३ । २८ इति मनुना, 'अलङ्कृत्य कन्यामुदपूर्व्वं दद्यात्' आश्व० १ । ६ । १ इत्याश्वलायनगृह्यसूत्रेण, 'कन्यां सालङ्कारां......तुभ्यमहं सम्प्रददे' इति १ । ४, १ । ८ इति पारस्करभाष्ये विवाहपद्धतौ हरिहरेण 'असुकगोत्रोत्पन्नामिमाममुकनाम्नीमलङ्कृतां कन्यां प्रतिगृह्णातु भवान्' इति विवाहसंस्कारविधौ सङ्कल्पे स्वा० दयानन्देन च प्रदीयमानकन्याया अलङ्कारयुक्तता मता । तस्या अलङ्कारयुक्तता तु पितुः स्वामित्वे पितृकर्तृकप्रदानत्वेनैव च भवति— इति निश्चप्रचम् । ऋतुमत्याश्च यदा ततः पितुः स्वामित्वं नश्यति; तदा सा तस्मिन्नापत्काले विन्देत सदृशं पतिम्' ९ । ९० 'गम्यं त्वभावे दातॄणां कन्या कुर्य्यात् स्वयं वरम्' याज्ञ० आचा० विवा० ६४ इति स्वयंवरा भवति; तदा तस्यां तत्पितुः स्वामित्वाऽभावेन, तस्याः पितृवस्तुन्यपि नाऽधिकारो भवति; अत एव तदा साऽलङ्कृता न भवति, अत एवोक्तं मनुना— 'अलङ्कारं नाऽऽददीत पित्र्यं स्वयंवरा । मातृकं भ्रातृदत्तं वा स्तेना स्याद्, यदि तं हरेत्' म० ९ । ९२ । परं यदा खलूक्तग्रन्थेषु तस्या अलङ्करणं निर्दिष्टम्, तेन प्रतीयते, यत्- सा स्वयंवरा न भवति, किन्तु पित्रा दीयमाना भवति । पित्रा दीयमानता तु पितुस्तस्यां स्वामित्व एव भवति, पितुः स्वामित्वञ्च म० ९ । ९३ ऋतुकालात् पूर्व्वमेव भवति । स एव च वैधो विवाहो नाम । तदितरस्य तु निन्द्यत्वम्- 'अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा । निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान् विवर्जयेत' मनु० ३ । ४२ । तेन तस्या ऋतुकालात् पूर्व्वं द्वादशवर्षे विवाहो युक्ति-प्रमाणोपपत्त्युपबृंहितः सिद्धः ।

विवाहभेदेषु स्वयंवरस्य नाम नाऽस्ति । यदि स्वयंवरो गान्धर्व्वविवाहेऽन्तर्गण्येत, तर्हि तु तस्य निन्द्यता भवति धर्म्मे

शास्त्रगतेन म० ३। ३९—४१। तर्हि महाभारतवचनं भवान् कथं दातुमधिकृतः। तत्र यदि कस्यचिदितिहासे तथा दृष्टमपि; तर्हि किमितिहासो धर्म्मशास्त्रं भवति?। न्यायदर्शने लिखितम्- 'यज्ञो मन्त्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य, लोकव्यवहार-व्यवस्थापनं धर्म्मशास्त्रस्य विषयः' ४।१।६२। लोकवृत्तमात्रं प्रमाणं न भवति, अत एव- 'वेदः स्मृतिः सदाचारः' मनु० २। १२ अत्र सदाचारस्य तृतीयं पदम्। इतिहासे महाभारत एव वर्णनं समागच्छतियत्- पूर्व्वं विवाहविधिर्न भवति स्म; तर्हि किं तद् अदार्त्तव्यम्भविष्यति वृत्तम्? संस्कारविधिश्च तदाऽनादर्त्तव्यो भविष्यति किमु?। इतिहासे रावणस्याऽपि वर्णनम्, येन परकीयस्त्री चोरिता; तर्हि किं स धर्म्मो भविष्यति? इतिहासे राक्षसविवाहानामपि वर्णनम्; किं तत्र वैधता भवन्मतेन?।

'अयमेव मे भर्त्ता स्यादि'ति रेखाङ्किते भवदुद्धृतसायणभाष्ये 'विवाहालये पित्रोपस्थापितो भर्त्ता' एवाऽभिप्रेतः। मम कपोलकल्पितमिदं न वचनम्, किन्तु भवदाचार्य्यमान्यस्य- 'यः कश्चित् कस्यचिद् धर्म्मो मनुना परिकीर्तितः। स सर्व्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः' म० २।७ 'इदं शास्त्रन्तु कृत्वाऽसौ मामेव स्वयमादितः। विधिवद् ग्राहयामास' म० १।५८ 'यह मनुस्मृति जो सृष्टि की आदि में हुई है- उस का प्रमाण है' सत्यार्थ० ११ समु० पृ० ३४१ गु०। - इत्येतादृशस्य मनोरेव वचनम्। सत्यमपीदमेव- देयवस्तु स्वतन्त्रं न भवति, अत एव मनुराचष्टे- 'विशीलः कामवृत्तो वा गुणैर्व्वा परिवर्ज्जितः। उपचर्य्यः स्त्रिया साध्व्या सततं देववत् पतिः' ५।१५४ 'पतिं हित्वाऽपकृष्टं स्वमुत्कृष्टं या निषेवते। निन्द्यैव सा भवेल्लोके' ५।१६३। पितरमतिरिच्य कःकन्याया हितैषी भविष्यति, यःकन्याहितं विचार्य्य तस्यै वरं न दापयेत्।

युवतिः कन्यैव स्वाऽनुकूलं पतिं ज्ञातुं शक्ता— इति तु

सन्निपातप्रलपितमात्रम् । अन्यदीयस्वभावचरित्रयोः परीक्षणं किमपि सुगमकृत्यं न, अत्र दूरदर्शिनोऽपि पदे पदे संशेरते । १७–२४ वर्षीयाः स्त्रियास्तु वार्त्तैव न कथनीया । तस्मिन् वयसीन्द्रियवृत्तिः प्रबला भवति, अनुरागश्चैकदैवोन्मुखो भवति; अन्यदीय—प्रकृतिपरीक्षायां ययोर्धैर्यविवेकयोः प्रयोजनीयता, तौ तदाऽकर्म्मण्यौ भवतः, एकः सुतीक्ष्णकटाक्षो मृदुमधुरहास्यं किञ्चिदङ्गलावण्यवैचित्र्यञ्च तदा सहसैव मनोदुर्गमधिकुरुते; स्वभावचरित्राऽऽदीनां परीक्षाया अवसरोऽपि तदा नाऽयाति । तदवस्थायां कामभावस्याऽऽधिक्येन सात्त्विकप्रेम्णः प्रभावस्य चित्तादपसरणकारणेन चेतसो मार्दवं नश्यति; प्रकृतिश्च बहुपुरुष—भावभावितत्वादेकस्मिन् स्थैर्य्यं न बिभर्त्ति, पितृगृहे च स्वातन्त्र्याधिक्याल्लज्जायाश्च न्यूनत्वादधिकायुषि पतिवशित्वं लज्जाशीलत्वञ्च दुश्शकम्भवति । यस्मिन् देशेऽधिकविवाहवयोनियमः, तत्रैव च विवाहोच्छेदप्रथाऽपि भवति । यदि सम्यक्तया तस्मिन् वयसि स्वभावादिपरीक्षा परस्पराऽभिलषितता मूलकशान्तिश्च सुशकाऽभविष्यत्; तदा इङ्गलैण्डादिके कथमेतदभविष्यत् । अत्राऽपि 'कौंसिले' अधिकविवाहवयोनियमो निर्द्धारितः; तत्रैव च 'विवाहोच्छेदनियममपि स्वीकारयितुं प्रयत्यते पाश्चात्योपनयनधारिभिः । फलतोऽन्धानुरागप्रणोदितविवाहस्य बन्धने सत्यप्रेम्णः समुत्पत्तेः सम्भावनाऽतिकठिना, अतः साधारण्यामेव वार्त्तायां तद्—बन्धनं स्वयमेव विच्छिन्नं जायते, अधुना तदादिकदेशेष्वेव एतत्परिणतिकदर्थिता जना विवाह—प्रथामेव रोद्धुमुद्यताः । यदि तत्राऽधिकवयस्कपरस्पराभिलषितविवाहः सुखजनकोऽभविष्यत्, तर्हि तत्सुखाऽपसारणायेत्थं यत्नाऽऽग्राहौ कथमभविष्यताम् ? । ईदृशा उपप्लवा अधिकवयस्कविवाहस्यैव फलानि, नाऽत्राऽत्युक्तिर्मृषोद्यता वा । यदि वार्त्तमानिकाशिक्षितम्मन्या अत्राऽपि तां सरणिं प्रचिचालयिषवः; तर्हि तैर्विवाहविच्छेदादिकण्टकैः समाजस्य अङ्गभङ्गतायामपि सज्जी

भाव्यम् । अथ च विवाह्यस्य विवाह्याश्च स्वातन्त्र्यमात्रे परस्पराभिलषितत्वे च स्थापिते कुरूपस्त्रीपुरुषाणां कीदृशी व्यवस्था स्यात्? । कुरूपाऽपि च सुरूपमेषिष्यति, कुरूपोऽपि च सुरूपाम; तर्हि यदि मातापितृहस्ते इदं कार्य्यं न स्थाप्येत; तर्हि किं कुरूप—कुमारकुमार्य्यौ ब्रह्मचर्य्यं धारयेतामामरणम्? यतः कुरूपयोरितरेतरं कदाऽपि परस्पराऽभिलषितता न स्यात्? 'कन्या वरयते रूपम्' इति, यदि सा कञ्चन निर्द्धनमकुलीनं च सुरूपं वरयेत; तर्हि रूपमात्रमत्तया स्वभविष्यन्निर्व्वाहस्तया कथं चिन्तयितुं शक्येत— एवमादिका अन्या अपि भूयिष्ठहानयः सन्ति ।

'त्रीणि वर्षाण्यु—' इति मदुद्धृतं मनोरापत्कालिकं श्लोकद्वयमुद्धृतम्, एतेन श्रीमतः किं निष्पन्नम्? । तत्सध्रीचीनं मत्पङ्क्तिद्वयं श्रीमता न वा उद्धृतम्, नचाऽपि प्रतिषिद्धम् । तदिदम्— "एतेन स्वयं भर्तुरधिगमने पापं व्यज्यते, अदीयमानत्वं तु विशेषशास्त्रम्, विशिष्ट—शास्त्रमेकदेशि भवति, न सार्व्वत्रिकम् । सार्व्वत्रिकन्तु सामान्यशास्त्रमेव भवति, नियमाः सामान्यशास्त्रमेव मत्वा निर्म्मीयन्ते" इति भवताऽस्पृष्टा पङ्क्तिरेवाऽऽपत्कालिकतां विवृण्वती भवन्मतमधिक्षिपति ।

'कन्यायां दत्तशुल्कायां म्रियते यदि शुल्कदः । देवराय प्रदातव्या यदि कन्याऽनुमन्यते' ९ । ९७ अत्र कन्याऽनुमतिग्रहणेन भवदभिप्रेतं न सिद्ध्यति, यतोऽनुमतिग्रहणस्य त्वयं स्पष्टोऽभिप्रायो यत्— पूर्व्ववरमृत्युकारणात् कदाचित् सा 'प्रदानं स्वाम्यकारणम्' म० ५ । १५२ इति तमेव वरं स्वामिनं जानाना तन्मृत्यौ विवाहमेव न चिकीर्षन्ती भवेत्, अत एव सा पृच्छ्यते, नाऽन्योऽत्राऽभिप्रायः, अन्यथा तज्जीवनसमये शुल्कसमयेऽपि सा पृष्टाऽभविष्यत्तत्कृते; परं मनुना न तल्लिखितम् । ततो विवाहे तदनुमतिग्रहणं सा खलु वाग्दत्ता मृतस्वामिनो भ्रात्रे देया भवति ।

'तमस्मेरा युवतयो युवानम्' 'अयमपि मन्त्रो न विवाहकालिकः, किन्तु युवतिशब्दमात्रं दृष्ट्वोद्धृतः प्रतीयते. किं यत्र मन्त्रे युवतियुवशब्दः स्यात्, स विवाहस्यैव भवति? किं विवाहानन्तरं युवतिता नश्यति?" इति गतलेखस्थमत्पङ्क्तिमस्पृष्ट्वा 'अप्रतिषिद्धमनुमतम्' इति न्यायात् स्नातकमहोदयेनैव साधितम्, यद्— नायं विवाहमन्त्र इति। सत्यग्रहणकृते धन्यवादः स्याच्छ्रीमते। यदि पुनरप्याग्रहः स्यात्, तर्हि तेन ज्ञेयमिदम्, यदत्र—'अपांनपाद् देवता' नतु 'दम्पती' विवाहो देवता, नाऽत्र विवाहाऽवस्थागन्धोऽपि।

अग्रे च श्रीमान् युवतिषु बहुवचनविषयके मत्प्रश्ने प्रकृतमन्त्रभिन्नमन्त्रस्थं श्रीहरदत्ताचार्य्यभाष्यं स्वतःप्रमाणीकृत्य समाधत्ते; परं तन्मन्दम्। 'बहुलम्' इति कथनाद् व्यत्ययस्सर्व्वत्र न भवति, अन्यथा वचनस्य सर्व्वत्राऽव्यवस्थाऽऽपतेत्, 'तां पूषन्! शिवतमा मेरयस्व' ऋ० १० । ८५ । ३७ इत्यत्राऽपि भवन्मताऽनुसारं 'तामेरयस्व' इत्यत्र 'ता एरयस्व' इति व्यत्यय पुनरपि भवदनिष्टं स्यात्। वस्तुतस्तु— वेदस्य बहुस्त्रीपक्षोऽपि स म्मतः—, तथा च— '<u>पतिं</u> न नित्यं <u>जनयः</u>' ऋ० १ । ७१ 'पतिं न <u>पत्नी</u>रुशतीरुशन्तम्' ऋ० १ । ६२ । ११ '<u>जनी</u>रिव पति<u>रेकः</u> समानः' ऋ० ७ । २६ । ३ 'अदान्मे पौरुकुत्स्यः <u>पञ्चाशतं</u> त्रसदस्युर्<u>वधूनाम्</u>' ऋ० ८ । १९ । ३६ 'मर्य्य इव <u>युवतिभिः</u>' ऋ० ९ । ८६ । १६, साम० पव० ५ । ६ । ४, 'मर्य्य इव <u>योषाः</u>' अ० १८ । ४ । ६० 'कल्याणीभिर्<u>युवतिभिर्न</u> मर्य्यः' ऋ० १० । ३० । ५ 'परिष्वजन्ते <u>जनयो</u> यथा पतिम्' अथर्व० २० । १७ । १, ऋ० १० । ४३ । १, साम० ऐन्द्र० ४ । ३ । ६, 'पतिर्जनीनामुप याति' ऋ० ९ । ८६ । ३२ इति वेदे। 'ददौ दश स धर्म्माय कश्यपाय त्रयोदश। सामाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम्' मनु० ९ । १२९ इति पूर्व्वः

श्लोकतोऽनुषञ्जनीयम्, 'ब्राह्मणस्याऽनुपूर्व्येण चतस्रस्तु यदि स्त्रियः' मनु० ६। १४६ इत्यादि स्मृतिषु एकस्य पत्युर्बहुपत्नीनां वर्णनम्। 'तिस्रो ब्राह्मणस्य वर्णाऽऽनुपूर्व्येण' पार १। ४। ८ इत्यादिपारस्करगृह्यसूत्रे, सायणभाष्यीयेऽथर्व्ववेदे १४ काण्डे कौशिकसूत्रे 'तेनैवाऽह्ना पञ्चन्याऽप्यूढा' २। ७४ एतदादिष्वपि पूर्व्वोक्तं सिद्ध्यति। इतिहासस्तु एतदादिकोपाख्यानैर्व्याप्त एव, महाभारते स्वोद्धृतो ययातिविवाह एव दृश्यताम्। अधुना भवतो व्यत्ययः कुत्राऽन्तरधात्? उक्तमन्त्रेषु श्रीसायणाचार्य्यस्य श्रीहरदत्ताचार्य्यस्य, तोद्भिन्नस्य वा कस्याऽपि भाष्यमपि स्वैरं द्रष्टव्यम्। 'एकस्मिन् यूपे द्वे रशने परिव्ययति, तस्मादेको द्वे जाये विन्देत' तैत्तिरीयसं० ६—६। ४ 'एकस्य बह्व्यो जाया भवन्ति, ऐ० ब्रा० ३। २। १२, गोपथ० उत्त० ३। २०, काठक० २६। ८ इत्यादीनि प्रमाणानि दृष्ट्वाऽथर्व्ववेदे 'सपत्नीबाधनसूक्तमपि द्रष्टव्यम्' आपस्तम्बगृह्यसूत्रेऽपि ३। ६। ८ 'सपत्नीबाधनं' द्रष्टव्यम्। एतेन भवदपदेशस्य समूलोन्मूलनं निष्पन्नम्।

स्वयंवरमन्त्रं प्रदर्श्य तत्र मत्कृतामापत्तिं समाधित्सुः स्नातकमहाशयः स्वाचार्य्यस्य प्रथमसमुल्लासीयं 'सैन्धवमानय' इति दृष्टान्तमुदाहार्षीत्, तत्तु तस्यैव कण्ठकुण्ठताकरम्, यतो नाऽमुष्मिन् मन्त्रे 'स्वयंवरो देवता' किन्तु 'इन्द्रो देवता'। 'इन्द्रश्च इन्द्रं मित्रम्' ऋ० १। १६४। ४६ इति भवन्मते परमात्मा, प्रकरणञ्च देवतात्मकमेव स्वीकर्त्तव्यम्भवति— आशासे सोऽपदेशान्तरं गवेषयेत्। गतलेखे श्रीमता सायणभाष्योद्धरणे— 'सर्वात्मकस्याऽन्तर्यामिस्वरूपेणाऽवस्थितस्येन्द्रस्य' इति पाठं मुक्त्वा स्वपारम्परिकप्रक्रातिश्चरितार्थीकृता, येनाऽर्थे भेदः समजनि। अग्रे स स्वयं विप्रतिषिद्धं भवति— 'अत्र मूलमन्त्रे क्षत्रियकन्यैव स्वयंवराऽर्हा— इति सूचकं न किमपि पदम्' इत्युक्त्वा 'द्रौपद्यादिकोदाहरणानदर्शैस्तु सुप्रसिद्धत्वेन क्षत्रियास्वेव स्वयंवरविधानं

सीमयितुम्' इति स्वयमेव श्रीमान् आत्मना प्रत्युक्तः, वयमत्र किं वदेम ? सूलमन्त्रे श्रीमता 'क्षत्रिय' शब्दो न प्राप्तः, परं 'शंसन्तीं मनसा' ऋ० १० । ८५ । ९ इति मूलमन्त्रे श्रीमता 'यौवनपदं' समुपलब्धम्; धन्याः ! यदि श्रीमतैव स्वयंवरः क्षत्रियासु सीमितः क्रियते; तर्हि ब्राह्मणोदाहरणं वेदाद् विरुद्धमेव दत्तम्, एतेन स्पष्टम्— 'गान्धर्व्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ' मनु० ३ । २६ 'चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः' म० ३ । २४ इति धर्म्मशास्त्र (स्मृति) विरुद्धं येन ब्राह्मणेन तथा कृतम्, तस्येतिहासोऽनुकर्त्तव्यो न भवति । लोकवृत्तव्यवस्थापनविषये धर्म्मशास्त्रस्य प्रामाण्यं भवति, न लोकवृत्तस्येति प्राङ् 'न्यायदर्शन' प्रमाणमस्माभिर्दत्तमेव । अथ चेतिहासेनैव स्वयंवरप्रामाण्ये इतिहासेनैव प्राक्तने कस्मिँश्चित्समये विवाहाविध्यभावदर्शनाद् विवाहसंस्कारविधिरप्यवैदिको मन्तव्यः स्यात्, अतः सिद्ध्यति, यदितिहासे धर्म्माऽवलम्बः प्रामाण्याऽप्रामाण्यं वा न निर्विभर्त्ति ।

श्रीमता शान्तिपर्व्वणः २२४ अध्याये सुवर्च्चलाकथाऽऽख्याता, परमस्मत्पार्श्वे विद्यमाने महाभारते (सातवलेकरप्रकाशिते) न प्राप्ता; शान्तिपर्व्वणि राजधर्म्मपर्व्व—आपद्धर्म्मपर्व्व—मोक्षधर्म्मपर्व्व चेति पर्व्वत्रयं विद्यते, एषु कतरस्मिन् भवन्निर्दिष्टा कथा ? । आद्ये राजधर्म्मेण ब्राह्मणधर्म्मस्य कः सम्बन्धः । द्वितीये—आपद्धर्म्मस्य सार्व्वसाधारण्यं न भवति— इति व्यर्थस्तदन्वेषणप्रयासः । तृतीये च मोक्षधर्म्मेण सह स्वयंवरस्य कः सम्बन्धः ? । तथाऽपि भवदुक्तश्लोका एव परीक्ष्यन्ते— 'येभ्यस्त्वं मन्यसे दातुं मामिहाऽऽनय तान् द्विजान्' इति कन्योक्त्यैव निश्चीयते यत्—पिता यस्मै दित्सति, कन्या तमेव वरयति, तर्ह्यत्र कन्यायाः किमिव स्वातन्त्र्यं स्थितम् ? । सा पतिम् इत्थं वरयति, यथा—कस्यचिदुत्सवस्य कश्चन सभापतिः प्रबन्धकेन प्रागेव निर्णीयते ।

ततश्चोत्सवसमये स एव तस्य साभापत्यप्रस्तावं प्रस्तौति, अपरश्च सभाप्रतिनिधिः सभा वा तमनुमोदयति समर्थयते वा। तथैवाऽत्राऽपि पितृनिर्णीतस्य वरस्य कन्या वरणापरनामकं समर्थनमात्रमेव कुरुते; तेन कन्यायाः स्वातन्त्र्यं न सिद्धम्। यदि ज्ञानप्रधानत्वाद् ब्राह्मणकन्यानां स्वयंवरविधिर्भिन्न आसीत् क्षत्रियाभ्यः; तर्ह्यत्र निर्दिश्यतां वैदिकी परिभाषा; परं भवदनुसारं तु स्वयंवरप्रतिपादकमन्त्रे किमपि स्वयंवरविधेर्यथावर्णं तारतम्यं नाऽस्ति, अत्र च भवता तत्तारतम्यं प्रदर्शितम्, इति भवतो विप्रतिषिद्धता फलिता भवति, या स्वपक्षस्य विघातिका भवति।

अधुना देवयानी विषये विविच्यते— श्रीमता 'संप्राप्तयौवनाम्' अत्र रेखा दत्ता। तदग्रे— 'पञ्चवर्षशतान्येव कचस्य चरतो व्रतम्' आदि० ७६। २७ गुरोरुष्य सकाशे तु दशवर्षशतानि च, ७६। ७२ इत्थं संप्राप्तयौवनायां १५०० वर्षाणि कचेन यापितानि महाभारताऽनुसारम्, तस्याऽपि बहुवर्षाऽनन्तरं तस्या ययातिना सह सम्बन्धो जातः, किं श्रीमन्नये साऽधुनाऽपि युवतिः स्थिता? यदि कथ्येत— इदं गप्पम् (?); तर्हि त्वियं कथाऽपि 'गप्पभूता'; तर्हि कथं तदुद्धरणं स्थाने?। यदि देवादीनां दीर्घायुषि सन्देहः स्यात्, तर्ह्यस्मिन् विषयेऽप्यहं वेदद्वारैव दीर्घायुष्ट्वं साधयितुमीशे; श्रीमतामनुमतिप्रदानमात्राऽपेक्षा। यदि कथ्येत— दैत्ययोनिरपि देवयोनिवत् सदा युवतिस्तिष्ठति; तर्हि तत्र वैलक्षण्यं न किमपि स्थितम्; तर्हि 'प्राप्तयौवनाम्' इत्यस्याऽधो दत्ता रेखा वैयर्थ्यमापद्यते।

अनेन स्वयंवरमूलकस्वातन्त्र्येण स्पष्टमेतत् सिद्धम्, यत्-सा कदाचित् कश्चिद्देषिष्यति; कदाचिच्च कश्चित्। असावनौचित्येऽपि कचमियेष। कचस्य निषेधमात्रेणैव समञ्जसकारिणे निरपराधायाऽपि तस्मै साऽशपत। ईदृशफलानि श्रीमन्तोपीच्छन्ति स्वयंवरं प्रचिचालयिष्य‡?। यद्येकेन सह तस्या ईदृशो व्यवहारोऽ-

‡ प्रचिचालयिष्य— णयन्तसन्नन्तस्य ल्यपि रूपम्।

जनि; तदाऽपरेण सह तस्याः कीदृश्यवस्था तिष्ठेत् । श्रीमताऽग्रे तदितिहासः पठितः स्याद्, यत्र स ययातिरपि पितृद्वारा शापितश्शर्म्मिष्ठाकारणात् । क्लिमीदृंश्येव ‡ सुफलानि (?) श्रीमन्तोऽपीच्छन्ति स्वयंवरमूलकस्वातन्त्र्यं प्रदाय? । काचित् स्वयंवरा स्वपितृव्यादिपुत्रे आसजेत्; तर्हि किं श्रीमन्तस्तदिच्छा—पूर्त्तिं कारयिष्यन्ति? यदि न, तर्हि कोऽसौ नाम स्वयंवरः? स्वच्छन्दाः पठितशास्त्रा अपि सौन्दर्यमदमत्ता उच्छृङ्खलतामाचरन्त्येव । स्वातन्त्र्यमूलकदुष्फलादेव तु सा ब्राह्मणकन्याऽपि श्रीमत्सिद्धान्तेऽप्यनीप्सितमसवर्णाविवाहं चकार, किमिदं दुष्फलं स्वयंवरस्य न? । अन्यदीदृशविवाहस्य फलं श्रूयताम्—'न्यवर्त्तत नचैव स्म क्रोधसंरक्तलोचना' आदि० ८३ । २५ सा- देवयानी; इदं परस्पराऽभिलषिततायाः सुफलम् (?) ।

स्वयंवरेऽपि तस्या विवाह ऋतुकालात् पूर्वमेव जात इति महाभारतात् प्रतीयते । यतो विवाहाऽनन्तरं तस्यास्तेन सह सङ्गादिके जातेऽपि ऋतुकालः पश्चादेव प्राप्तः; अत एव तत्र लिखितम् 'वेदाऽहं तात बालाऽपि' ७६ । ८ अत्र तया स्वबालावस्था दर्शिता; अनेन सिद्ध्यति, यत्—सा बाल्यावस्थायामेव प्राप्तयौवनाऽऽसीत् स्वयोनिस्वाभाव्यात् । 'ऋतुकाले तु सम्प्राप्ते देवयानी वराङ्गना । लेभे गर्भं प्रथमतः' आदि० ८२ । ५ अनेन प्रतीयते, यदयमेव प्रथम ऋतुकालोऽत एव प्रथमश्च गर्भ आसीत् । प्राक्तनसङ्गे तस्या ऋतुकालप्राप्तिर्न निर्दिष्टा । शर्म्मिष्ठाया ऋतुकालोऽपि विवाहस्य किञ्चित्कालाऽनन्तरमेव जात इति तत्र द्रष्टव्यम् । शर्म्मिष्ठाया विवाहस्तत्र कामपूर्वको न निर्दिष्टः, तथाऽपि तस्या देवयानीतोऽधिकसन्ततयो जाताः । ययातेरपि तस्यां [शर्म्मिष्ठायां] प्रेमविशेषोऽप्यभूद्- इति महाभारते द्रष्टव्यम् । तस्मादस्मत्पक्षः सुसिद्धो जातः ।

मया ऋतुकालात् पूर्वं विवाहविषये वेदस्य, तत्तत्स्मृतीनां गृह्यसूत्राणाम्, आयुर्वेदस्य च बहूनि प्रमाणानि सङ्कलितानि सन्ति । विस्तरभियाऽधुनाऽप्रकाश्याऽवसरे सति प्रकाशयिष्यन्ते ।

‡ क्लीबे नुमनुस्वारश्च-ईदृंशि ।

यत्तु श्रीमान् स्मृत्यादिप्रमाणविषये 'श्रीः' पत्रस्य ४ । १ संख्यायामलिखद्, यद्- 'एतादृशानां वाक्यानां यत्र कुत्राऽपि यस्य कस्याऽपि मुनेर्नामतोऽप्युपलभ्यमानानां वेदविरुद्धत्वात् कल्पितत्वाच्च अप्रामाण्यम्' इति । तत्तु न रमणीयम् । वेदाऽविरोधो वेदाऽनुकूलता चाऽस्माभिः साधितपूर्व्वैव; शिष्ट एषोऽस्ति प्रश्नो यदन्यैरेवैतानि वाक्यानि तन्नाम्ना रचितानि-तत्रेदमुत्तरम्-यद्-विश्वासोऽपि कर्त्तव्यो भवत्येतदादिकाऽवसरे । अन्यथाऽविश्वासस्तु सर्व्वत्रैव समानतया भवितुं शक्नोति । एवन्तु कश्चिद् भवादृश एव एतदपि कथयितुं शक्यति, यद्-येषां येषां वेदमन्त्राणामुपरि येषां येषामृषीणां नाम निर्दिष्टम्, ते ते तेन तेन ऋषिणा नाऽऽविर्भाविताः, किन्तु तेषां तेषां नाम्नाऽन्यै रचिताः, तर्हि किं श्रीमानेतन्मंस्यते ? । कश्चित् कथयेद्—वेदा अग्नि-वाय्वङ्गिरोरविप्रभृतिभिर्न प्रकाशिताः, इमे तु 'भण्ड-धूर्त्त निशाचर—पोपनामभिर्व्विरचिताः; तर्हि किं श्रीमानेतन्मंस्यते ?। कश्चित् कथयेद्-द्वितीयावृत्तिः सत्यार्थप्रकाशः स्वा० दयानन्देन न रचितः, किन्तु तन्नाम्नाऽन्यैर्व्विरचितस्तन्निधनाऽनन्तरम्; तर्हि किं श्रीमानेतन्मंस्यते ?। यदि न; तर्हि वयमेवेदृशं भवत्कथनं कथं स्वीकुर्य्याम?। भवता यो दक्षस्मृतिश्लोक उपस्थापितः, स दक्षस्यैव ?। एवं प्रमाणान्तराणि तेषां तेषामेव ? यन्नाम भवान्निरदिक्षत् । क्षेपकता एकत्र भवति, न ग्रन्थराशिषु समाना क्षेपकता । किं रामायणे महाभारतेऽपि चाऽन्यग्रन्थेषु च स्थितं यद्विवरणमस्माभिर्गताङ्के निदर्शितम्-विवाहविषये क्षेपकता मता ?। आशासे विद्वाँल्लेखकोऽत्र निष्पक्षपातदृशा विचारयेत् ।

कोऽपि पिता स्वकन्यां पशुवद् नाऽनर्हाय प्रतिपादयति; अत एव श्रीकृष्णोक्तिर्नाऽस्मत्प्रतिकूला; यदि कोऽपि तथा कुर्य्यादपि; तर्हि स एव वचनीयो न पितृमात्रम् । कन्यास्तु रूपमात्रपिपासुकाः प्रकृत्या, न स्वभविष्यल्लाभाऽलाभं विवेक्तुमलम्; अत एव तासां स्वातन्त्र्यं तासां लाभायैवाऽपहृतमिति न कोऽपि दोषः ।

श्रैमत्क्यः सर्व्वा अप्यापत्तयोऽक्षरशोऽत्र समाहिता अस्माभिः अन्यदन्यदा श्रीमल्लेखान्तरं दृष्ट्वा प्रकाशयिष्यते । यदि विषयविवेचनायां श्रीमन्नीतिमनुसृत्य कश्चिदप्रियशब्दो मया प्रयुक्तः स्यात्, आशासे महाऽऽशयः श्रीमानिदं ... मर्षयिष्यतीति शम् ।

# पारिषद्वृत्तम्

काश्मीर-संस्कृतसाहित्यपरिषदः प्रचलितवर्षस्य आषाढमासान्मार्गशीर्षमासपर्यन्तं वृत्तम्।

आषाढस्य २८ शे सायं पञ्चघण्टायां परिषदुत्सवे प्रथमं शिवनाथ शास्त्री एस० बी०, एस० एम०, महोदयैः "बौद्धधर्मप्रचारः" इत्यस्मिन् विषये सारगर्भितं व्याख्यातम्। तदनु पं० लक्ष्मीचन्द्रशास्त्रिणा ' "त्रिंशति संख्याकः रत्नसंग्रहः" पठितः। ततः पं० विश्वदेवमहाशयैर्धार्मिकं विषयमवलम्ब्य सुस्पष्टं व्याख्यातम्। ततः परिषद्विसर्जनं मन्त्रिमहाशयैः कृतम्।

श्रावणस्य त्रिंशे प्रविष्टे सायं पञ्चघण्टावादनसमये परिषदधिवेशने साधारणकार्यानन्तरं "धर्मस्य कदा पापत्वं" विषयमवलम्ब्य पं०ईश्वरचन्द्र दर्शनाचार्य-दर्शनाध्यायकेन लवपुरीयेन विस्तृत्य व्याख्यातम्। ततः मन्त्रिमहाशयैर्व्याख्यातुर्धन्यवादपुरःसरं परिषद्विसर्जिता।

२८ शे भाद्रपदे सायं षष्ठे वादने राजकीयप्रदर्शिन्युत्सवदर्शन लग्नेषु जनेषु परिषदि न्यूनसभ्यसंख्यायामेवाधिवेशनकर्मणि प्रधानाज्ञया कार्यारम्भे प्रेमनाथलङ्गू नाम्ना विद्यार्थिना "विवाहविषये" स्वल्पमेव भाषणं कृतम्। तदनु उपदेशक पं० दयारामो "आर्यजनता संख्या ह्रासकारणविषये" लेखरूपेण व्याख्यानं दत्तवान्। प्रधानवर्येण वक्तृ धन्यवादपुरःसरं परिषद्विसर्जिता।

आश्विनस्य त्रिंशे प्रविष्टे परिषदधिवेशने लग्नेऽपि मन्त्रिवर्येषु वाइसराय महोदयकषायोत्सव (टीपार्टी) कार्ये संसक्तेषु परिषदि निश्चितसमयानुपस्थित्या सभ्यानामेव सुरभारती समुन्नत्यै केवल परस्परं भाषणान्यभूवन्, न सभाकार्यं किमपि।

मार्गशीर्षस्याष्टमे प्रविष्टे परिषदधिवेशने प्रधानोपप्रधानयोरनुपस्थितौ मन्त्रिवर्यस्यादेशात्परिषत्कार्यारम्भे संपन्ने प्रथमं पं

शिवनाथ शास्त्री, एस० बी०, एम० एम०, महोदयेन "पण्डितश्रीवरः" इति शीर्षकत्वेन काश्मीरिक ग्राम्यगीतं विस्तृत्य व्याख्यातम्। अनन्तरं वातीक रामनाथेन "ब्रह्मचर्यविषये," मुकुन्दराम शास्त्रिणा "विपरीता कथाप्रणाली" इन्यस्मिन् व्याख्यातम्। पं० गोविन्दभट्ट शास्त्री च मुकुन्दरामविषयमनुमोदितवान्। तत आगत उपप्रधानवर्यः स्वकीयनिरर्गलवाण्या कथाप्रणालीं कथावाचकतां-कथा गायकतां च सुस्पष्टम संपूर्णां वितस्तार। ततस्तु मन्त्रिमहाभागेन धन्यवादपुरः सरं सभाकार्यविसर्जनं कृतम्। इतश्च मन्त्रिवर्येण पं० कुलभूषणेन गतवर्षेषु यथा कषायं (चाय) संपादितमागतम्। परिषत्सभ्यैरन्यै रभ्यागतैः कषायपानेच्छुभिः कषायपानं कृत्वा धन्यवाददानान्तरं निर्गतं परिषत्सदनात् सांप्रतं काश्मीरेषु शीताधिक्यं परिवर्धते, अतोधिवेशनकार्यं चैत्रमासपर्यन्तं न भविष्यतीति।

शिवनाथ शर्मा
परिषद उप मन्त्री

---

# समालोचनम्

(१६ पृष्ठतोऽग्रे)

डोंगरेन B. A. इत्यनेन गवालियारनिवासिनाङ्गलभाषायां लिखितम् ।मूल्यं १।।) लेखकात् प्राप्यते। उजयन नगरस्य प्राचीनेतिहासवृत्तं महाराजाशोक कालात् भोज पर्यन्तं,राजा जयसिंहात् महमदशाह पर्यन्तं सूबेदार रानोजी इत्यस्य तथा च महाराजा माधव राओ ,सिंधिया इत्यंस्याधुनिक महाराजस्य पितूराज्य पर्यन्तं परिचयो दत्तः उजयन राज्यस्य गवालियारन्तर्गतस्य लेखकेन। उजयन नगरस्याधुनिक जन संख्या १६३१ ई० वर्षीया ५५००० विद्यते येषु ३६००० हिन्दवः तथा च १५,००० महमदीया सन्ति। भारत कविशिरोमणेः कालीदासस्यापि जन्म स्थानं केचन उजयन नगरीमेव मन्यन्ते। परं डोंगरे महाशयः काश्मीर भूमिमेव कविरत्नस्य जन्म भूमिं स्वीकरोति। लवपुरीय पं० लक्ष्मीधर शास्त्रिणा तथा च ठाकुर भाउ दाजीना मतेन काश्मीर भूरेव कालीदासस्य स्थानम्।

उजयन नगरी प्राचीन कालादेव हिन्दू संस्कृतेः सभ्यतायाश्च केन्द्रं वर्तते। भगवतः श्रीकृष्णस्य विद्यालाभायगुरुकुलमपि उजयन नगरीमेव वर्णयन्ति। श्रौतधर्मानुसारेण वैदिक धर्मस्यापि केन्द्रमुजयनमेव ततो बुद्ध जैनमतस्यापि प्रचार स्थानं दृढं गढमिति उजयननगरं त्रयाणां धर्माणां महत्स्थानम्। अस्मादप्यधिकमस्ति उजयन देशस्य महत्वं हिंदूनामर्थे यत् उजयन नगरी ज्योतिष शास्त्रस्यापि केन्द्रं विद्यते। यथा वाराणसी प्राचीन भारत आर्यधर्मस्य संस्कृतशिक्षाया ज्योतिषशास्त्रस्य च केन्द्रं प्रमाणि कृतं तथैव च उजयन नगरी। संस्कृत कवीनां नाटकानाप्यत्रासीत् रङ्गभूमिः। महाकाली हरसिद्धि गोपाल मन्दिराणि सिरपा नदी च प्राचीन कालस्य महिमा दर्शति उजयनयां। केचन उजयन नगरीमेव कालीदासस्य मेघदूते वर्णितं यक्षस्य नगरीं मनवते। गवालियार राज्याधिकारिणा डोंगरे महाशयेन उजयन नगरस्य पुस्तकलेख प्रकाशनेऽनुग्रहीताः प्राच्यभारतरसिकाः। आशासे हिंदीभाषायां संस्कृते चास्यानुवादो भविष्यति।

श्रियः स०

भू०

# संस्कृत साहित्य परिषदः श्रीनगरस्य श्रियश्च नियमाः

**उद्देश्यः—**

परिषदोऽस्याः केवलमेक एवउद्देश्यः संस्कृतभाषार्यसभ्यता रक्षार्थं प्रचारः।

एतत् प्राप्त्यर्थं १।) श्रीनगरात् भिन्ननगरस्थेभ्यः। १) श्रीनगर स्थेभ्यश्च शुल्करूपेण धनमपेक्ष्यते। अनेनैव पत्रिकापि लभेत सभासत्त्वमपि च भवेत्।

श्रीःपत्रं सभासद्भिः सर्वैं रुप्यकेन एकेन १।) प्राप्यते। संस्कृतानुरागिभिरस्याः परिषदः सभासत्त्वम् स्वीकर्तव्यम् पत्र लिखनेन।

**सहायताः—**

परिषदो व्ययः पत्रिकाया अस्याः कृते शुल्कादत्यधिकं भवति, परन्तु धनाभावात् बहवः संस्कृतज्ञाः छात्राः ब्राह्मणाश्च विनामूल्येनैव लभन्ते पत्रम्। अतः सहायतारूपेण किञ्चिद् धनमस्यै अवश्यमेव संस्कृतोद्धारप्रणयिभिर्दातव्यम्।

**पत्रप्रकाशनसमयः—**

त्रैमासिकं पत्रमिदं सौरवर्षस्य आषाढ़, आश्विन, पौष, चैत्र मासेषु निर्गच्छति। पत्रप्रकाशनमासानन्तरमपि पत्रस्यानुपलब्धौ सूचनया पुनरपि प्रेषयिष्यते पत्रम्। मासादनन्तरं तु पत्रं न प्राप्यते।

**पत्रव्यवहाराः—**

लेखप्रेषणाय पत्रप्रबंधाय च निम्नाङ्कितेन प्रत्ययेन पत्रव्यवहारो विधेयः

पौष, माघ १९९३<br>जनवरी १९३७

कुलभूषणः<br>परिषन्मन्त्री<br>श्रियः सञ्चालकः<br>सम्पादकश्च

सुन्वार बाग़, श्रीनगर, (कश्मीर)

वर्ष ५ Vol. 5
संख्या ४ Number 4

❀ ओ३म् ❀

कश्मीर मण्डलान्तर्गत श्रीनगरस्थायाः

# संस्कृत साहित्य परिषदः

त्रैमासिकं पत्रम्

# श्रीः

Quarterly Journal of the

# SANSKRIT SAHITYA PARISHAD

SRINAGAR. KASHMIR.

श्रीनगर चैत्र १९९३

*Srinagar April, 1937*

वार्षिकं मूल्यम् १)

प्राप्ति स्थानम्—पं० कुलभूषणः श्री कार्यालय, बुल्वारबाग् श्रीनगर कश्मीर

## विषय सूची





सर्वे लेखा लेखकमहानुभावानां भाषामतानुसारेणैव प्रकाश्यन्ते। तेषामुत्तरदायिनो लेखका एव च सम्पादकाः।



---

## सम्पादक-समिति


१. पं० डाक्टर कुलभूषणः डी. पी. एच. (लण्डन)

२. पं० गोविन्द राजदानः, शास्त्री, एम.ए., एम.ओ.एल., एल.टी.

३. पं० जगद्धर जाडू, शास्त्री, एम.ए., एम.ओ.एल.

४. पं० शिवनाथः साहित्य-भूषणः, साहित्य-मणिः।


---


पं० भीमसेन विद्यालङ्कार द्वारा, नवयुग प्रिण्टिंग प्रैस, १७ मोहनलाल रोड लाहौर में मुद्रित।





| | | |
|---|---|---|
| वर्ष ८<br>संख्या ४ | चैत्र संवत् १९९३ वि०<br>अप्रैल १९३७ ईसवी | पूर्ण संख्या<br>२० |


# महाकविर्मङ्खः स्तद्गीता

## पण्डित सभा च

(ले०—श्रीनाथ तिक्कू शास्त्री आयुर्वेदिक कालेज, काशी हिन्दू विश्वविद्यालय)

प्रकृतिकमनीये स्वर्गसहोदरे शारदाचरणरज-कणपवित्र भूभागे काश्मीरदेशे सुरसरस्वतीसाहित्यसेवासमासादितयशः शरीरा अनेके कविवरा बभूवः। तेषु तावत् क्षेमेन्द्रकल्हणविल्हणा-दयः परमप्रसिद्धा एव केचन। चन्द्रकभर्तृमेण्ठश्रीशंकुकप्रभृतयस्तु केचन नाममात्रेणैव श्रूयन्ते। कतिपये तु कविवराः संस्कृत साहित्य-तारापथे समुज्ज्वलास्तारका इव देदीप्यमानाः कश्मीरवसुन्धरा मण्डलं मण्डयामासुः, किन्तु साम्प्रतं तेषां विस्मृतिनिविडपर्जन्यप्रच्छ-न्नानां न तथा संस्तवो विद्यते गीर्वाणवाणी विशारदे साधारणे समाजे, तेष्वेव तावत् महाकविर्मङ्खोऽपि, यस्य श्रीकण्ठचरितगीति-

भरितं श्रीकण्ठचरिताख्यं काव्यरत्नं विद्यमानमपि कालगतिवैचित्र्यान्न सर्वत्र विदिततरम्, भवतु। अस्मिन् लेखेऽस्यैव कविवरस्य विषये प्रियपाठकानां पुरः किञ्चिदुपवर्णयितुमुपक्रम्यते।

## कविवंशपरिचयः

अस्ति कश्मीरेषु शारदादेशशेखररत्नं वैतस्ततरलतरङ्गसहोदरं, श्रीशारिकाभगवतीविहारस्थलं श्रीनगरापरनामकं 'प्रवरपुरं' नाम नगरम्। अस्य पुरस्य पूर्वोत्तरस्यां दिशि श्रीरणादित्य महिष्या रणारम्भायाः कीर्तिपुञ्जमिव प्रवरपुर-प्रधान मन्दिरं गगनचुम्बितयोपासकानां स्वर्गारोहण सोपानमिव 'रणस्वामी' ति नाम्ना ख्यातं देवायतनमासीत्। ( इदं च साम्प्रतं 'जामामस्जिद्' नाम्ना प्रसिद्धमस्ति )।

अस्य द्वारस्य प्रधानद्वारसविधे भूभागे राजप्रासादोपकण्ठं कृतवसतिः 'मन्मथो' नाम सारस्वतवंशप्रभवः परममाहेश्वरो द्विजो वसति स्म। अस्य मध्यमे वयसि वर्तमानस्य सकलजनतानन्दनो 'विश्ववर्ता' नाम नन्दनः संजातः। असौ च विश्ववर्ता पण्डितपुङ्गवो भगवतो गिरिकन्यकाकान्तस्याऽनन्यमनसोपासको बभूव। अस्य क्रमेण 'शृङ्गारालङ्कारभृङ्गमङ्खकाभिधेय' श्चत्वारः पुत्राः समभूवन्। एतेषु लङ्केत्यपराभिधोऽलङ्कारः सुस्सलमहीपालस्य सान्धि विग्रहिकः समरमखदीक्षादक्षो बभूव। राजतरङ्गिण्यां च।

"अलङ्काराभिधो बाह्य राजस्थानाधिकार भाक्।
अधृष्यो मानुषैर्युद्धैर्विद्रदान् बहुधावधीत्॥"

इत्यलङ्कारस्योल्लेखो दृश्यते असौ च न केवलं समरवीर एव प्रत्युत कवितारसास्वादनप्रवणः शब्दशास्त्रस्य पारदर्शी बभूव। पातञ्जल महाभाष्यस्य बृहद्व्याख्यानमप्यसौ निर्मितवान्। श्रीकण्ठचरितस्याऽन्तिमसर्गेऽस्य वर्णनाविषये चतुर्दशपद्यानि समुपलभ्यन्ते। तेषु तावदेकमधस्तादुद्ध्रियते—

"एकं श्रीजयसिंहपार्थिवपतिं कश्मीरमीनध्वजं
तस्योपासित सन्धिविग्रहमलङ्कारं द्वितीयं स्तुमः ।
भूभारः प्रथमेन पन्नगपतेः क्ष्मां रक्षता वारितो
नीतोऽन्येन कृतार्थतां प्रवचनै र्भाष्योपदेशश्रमः ॥"

हरचरितचिन्तामणि महाकाव्यादिकर्ता राजानकजयद्रथोऽस्यैवाऽलङ्कारस्य पुत्र आसीत् ।

## समयः

महाकविर्मङ्खः श्रीजयसिंहमहीपते राज्यकाले कश्मीरमण्डलं मण्डयाम्बभूव । जयसिंहनरपतिस्तु ई० ११२७ मिताद्वत्सरादारभ्य ई० ११४६ मितसंवत्सरं यावत् काश्मीरान् शशास । अतएव मङ्खकस्याप्ययमेव कालइति निश्चप्रचम् । राजतरङ्गिणी ग्रन्थप्रणेता पण्डित कल्हणोऽपि अस्मिन्नेव समयेऽभूत् । 'मङ्खककल्हणयोः परस्परं सौहार्दं नेदिष्टः सम्बन्धो वाऽसीत्' इति केषाञ्चिन्मतम् । तथाहि ।

"तत्तत् बहुकथाकेलिपरिश्रमनिरंकुशम् ।
तंप्रश्रयप्रयत्नेन 'कल्याणं' सममीमनत् ॥"

इति पद्येन कल्याणनाम्ना कल्हणस्यैवोल्लेखोऽनुमीयते ।

## कवेर्जीवन वृत्तम्

स्वसहोदरेषु मङ्खः कनीयानासीत् । अल्पवयस्येवासौ वाग्देवताचरणचारणचक्रवर्ती सन् सर्वाणि शास्त्राणि कृत्स्नाश्च भरतनाट्यशास्त्रप्रमुखाः कलाः समनुशीलयामास । साहित्यविद्या सौविदल्लो राजानकरुय्यकोऽस्य गुरुरासीत् ।

योगराजनामकात् पण्डितवरादप्यसौ कानिचन शास्त्राण्यध्यजीगपत् । अयं महाराजाधिराज जयसिंहस्य 'प्रजापालन कार्यपुरुषः' (धर्मार्थकार्याध्यक्षः) बभूव । श्रीकण्ठचरितरचनाऽनन्तरं लब्धख्यातिर्मङ्खः श्री जयसिंहनृपेण श्रीकण्ठनाम्नो विद्यालयस्य प्रधानाध्यापक पदवीमप्यध्यारोपित आसीदिति राजतरङ्गिण्या अष्टमतरङ्गात्प्रतीयते ।

मङ्खकस्य पिता स्वसुतसौभाग्य सौख्यं समनुभवन् रणस्वामिदेवायतन प्रासाद एव कुशशय्यामधिशयानः शिवरात्रेः पावने निशीथे शिवपुरीं प्रतस्थे। मङ्खकस्तु पितृपादानामौर्ध्वदैहिकक्रियाः समनुष्ठीय निजचेतोभित्तेः शोकशंकुं शनैः शनैरुच्चखान। अस्मिन् काले मङ्खकोऽकृतदारपरिग्रहः प्रायो विंशति वर्ष देशीय एवासीत्॥

पितुः सुरपुर प्रयाणात् कतिचिन्मासानन्तरमेकदा मङ्खक एकादशीदिवसे धृतव्रतो ज्योत्स्नासावितायां यामिन्यां स्वसदनगोपानसीमधिशयानो हरिहररूपधारिणं निजजनकं स्वप्ने ददर्श। पिता च तं प्रत्यभिज्ञानपुरस्सरं समभिदधौ "लोकोत्तरश्चतुर्दशविद्यास्त्वमध्यगीष्ठाः, परन्तु किं प्रयोजनमेतेन, हे सुत! तदैव ते विद्या साफल्यं लप्स्यते यदानया भगवन्तं तरुणेन्दुशेखरं समाराधयिष्यसि।" इति। अथाऽन्येद्युश्चकितेनेव प्रकर्षहर्षमन्थरेनेवच मङ्खकेन श्रीकण्ठचरितं रचयितुमुपचक्रमे। मासोऽयं माधवस्यासीत्, पूर्णवर्षानन्तरं च महाकविरसौ स्वकाव्यं समापयामास।

अथ "ततः साफल्यदीक्षायैस्वपरिश्रमविप्रुषाम्।
तदेवाऽस्य प्रबन्धस्य नेष्यामि निकषाश्मताम्॥"

इति विचारयन् मङ्खो निजज्यायसोऽलङ्कारपण्डितस्यानेकसूरिवर विराजितं सभागृहं स्वकाव्यपरीक्षणाय प्राविशत्। तत्र च स्वकरकमलतलजाङ्कित काव्यं दर्शयामास। तत्रत्यास्तु समस्ताः सुधीधौरेयाः प्रतिपद्यपाठे मूर्धानं धुनानास्तत्काव्यं समभिनन्दयाञ्चक्रुः। प्रशशंसुश्च कामं कवेः कल्पनावैचित्र्यं गूढपाण्डित्यं च।

अथ मङ्खको मनसि परां परितोषमुद्रामासूत्रयन् स्वसदने समागत्य सपर्यावसरे तत्काव्यं भगवते पशुपतये समर्पयामास। ततः स्मररिपुपुरीपौरपदवीं प्रयातस्य पितुरादेशपरिपालनेन महाकविर्मङ्खः स्वात्मन्यमन्दमानन्दं कन्दलयाञ्चकार।

श्रीकण्ठचरितकाव्यादतिरिक्तो मङ्खरचितो 'मङ्खकोष' नाम्ना-प्रसिद्ध एकोऽभिधानग्रन्थोऽप्युपलभ्यते । अस्य कोषस्य कश्मीरेषु 'अमरकोष' वदेव प्रचार आसीत्, इति काश्मीरिकव्याख्यानकृतपण्डितानां कोषप्रमाणोद्धरणैः प्रतीयते । राजानकरुय्यककृतानां केषाञ्चिद्ग्रंथानामप्यसौ व्याख्यानानि रचितवान् ।

## कवित्वशैली

मङ्खकस्य काव्यकलना वैदिर्भीगौढीरीतिभूषिता यादृशी सरसा तादृशीक्लिष्टाऽपि । किन्तु तथापि कवेः कवित्वं नारिकेल-फलतुल्यं बहिः क्लिष्टमन्तर्माधुर्यरसनिः स्यन्दि केषां न सहृदय हृदय संवादशालिनां चेतोवतां चेतश्चमत्करोति ?

श्रीकण्ठचरितकाव्ये तु बहुत्र रमणीयानां परमऽप्रचलित-प्रायाणां पदानां व्याकरणप्रयोगाणां च सन्निवेशो विद्यते, एतेन कवेर्वैयाकरणधुरन्धरता कोषकोविदता च स्फुटं व्यज्यते । सुजन दुर्जन वर्णनाव्याजेन मङ्खकः काव्यतत्वानि तत्कालीन कवीनां पर-कविताकोष लुण्ठाकतां च विशदं वर्णयामास । कविरसौ शङ्कर-किङ्करकार्यपद्वीमेव वाणीं सफलां मन्यते, नश्वरपिण्डधारिणां नर-पतीनां चरित्रवर्णनापणेषु वाग्पण्य विक्रयमिव कुर्वाणान् कविजनान् विडम्बनाभाजनभूतान् वाग्देवतादूषकान् च मन्यमानो धिक्करोति— तथाहि—

"धिक्तान् कृतप्लुतिर्येषां भारत्यधिसरस्वति ।
स्वं दूषयति मत्तेव नृपचाटुकपांशुभिः ॥"

महाकवेरस्य कैलासवर्णनाऽत्यन्तं मधुरा प्रकृतिचित्रणचतुरा च । तत्रत्यं च—

"शशिशुभ्राः किरन्मासो हासो धनपतेर्दिशः ।
गिरिरस्तीह कैलासो निवासो वृषलक्ष्मणः ॥"

इति तावत् प्रथममेव पद्यं कीदृशं मधुरं कर्णप्रियं च ?।

"विवृण्वतासौरभरोरदोषं बन्दिव्रतं वर्णगुणैः स्पृशन्त्याः।
विकस्वरे कस्य न कर्णिकारे घ्राणेन दृष्टेर्वव्रथे विवादः।"

इति पद्येन कविना कर्णिकारकुसुमस्य रमणीयरूपत्वं सौरभराहित्यं च भङ्ग्या वर्णितम्। एतत्पद्यरचनानुरोधेनैव कविरसौ कविसमाजे 'कर्णिकारमङ्ख' इति ख्यातिमुपजगाम।

## कविकालीनः काश्मीरः

श्रीकण्ठचरितस्य तृतीयसर्गे कविना निजजन्मभूमिः सविस्तरं वर्णयाम्बभूवे। सान्द्रहिमसंवलितानां शैलशिखराणां, मुकुरकल्पानां नीलनील कीलालपूरपूरितानां बिसदण्डमण्डलीमण्डितानां च कासारवराणां, नानानृपतिसंस्थापितयज्ञस्तम्भानां च वर्णनापाटवेन कविवरेण प्रकृति प्रियाणां सरसहृदय संद्राविणी वर्णनाऽकारि।

मङ्खकस्य काले कश्मीरेषु प्रतिचतुरं प्रतिगेहं च हुतहविष्यस्य हविर्भुजो धूमसौरभं स्वैरं प्रसरन् स्वागतविधिमिव विदत्ते स्मागन्तूनाम्। द्विजनिलयेषु कुञ्चितकचकलापाऽलङ्कृताः कृष्णाजिनपरिधान परिभूषिताः वटवः स्वाध्यायं रारट्यामाणाः कामं मोदयन्ति स्म दैशिकवरान्।

तदानीन्तने काले शारदाकपटेश्वर मार्तण्डविजयेश्वरस्थानानि प्रसिद्धानि तीर्थान्यासन्, एतेषु क्षेत्रेषु विद्यालया अपि विद्यन्ते स्म।

तस्मिन्कालेऽपि काश्मीररमणीनां मस्तकेषु नीरङ्गिका (तॅरगूह्) परिधानं शोभते स्म। विलासिन्यः स्वसदनाट्टालिकासु गृहारामेषुच कदाचन दोलाक्रीडाभिः, कासारनदनदीषु कदाचन जलक्रीडाभिश्च स्वैरं विहरन्ति स्म। शिशिरकाले काश्मीरिकानामावासेषु हसन्तिकाः कथं शीतत्राणं कुर्वन्ति स्म, इति तावत्कविवचनैरेवोदाहराम :—

हिमागमे पत्रगृहेषु योषितां ज्वलद् बहुच्छिद्रसखीहसन्तिका ।
विभाति जेतुं मदनेन शूलिनं धृता ततिर्वह्निमयीव चक्षुषाम् ॥

## "मङ्खकवर्णिता पण्डितसभा"

मङ्खककाले कश्मीरे काचन पण्डित सभा बभूव । अस्याः प्रधानपीठं मङ्खकाग्रजन्मालङ्कापरनामधेयः श्रीमानलङ्कारपण्डितो भूषयाम्बभूव । अस्यां विविधशास्त्रनिष्णाता मत्सररहिता अनेके सूरिवरा अभूवन् ये किल तत्काले वर्तमानानां कविपण्डितानां तत्तत् कृतीनां परीक्षणपुरस्सरं हेम्नो निकषाश्मन्येव तारतम्यतां निर्धारयन्ति स्म, न केवलं शारदादेशीया एव, अपितु बहिर्देशीया अप्यत्र परीक्ष्यन्ते स्म ।

पण्डितसभाभवनं विशालेभूभागे प्रतिष्ठापितं प्रस्तरविनिर्मितमभ्रंलिहमिवाऽनेकमण्डपपरिमण्डितं बभूव । सभाभवनस्यान्तरङ्गमण्डपे नानाकम्बलपरिस्तृतान्यासनानि कोविदकुलसमाश्रितानि सुरपतिसभामप्युहसन्ति स्म ।

शस्त्रे शास्त्रे च पण्डितोऽलङ्कारपण्डितः प्रधानपीठमलङ्कुर्वाणः साक्षात्पुरन्दर इव राजते स्म । तमभितश्च तदानीं-काश्मीर भूपरिवृढस्य जयसिंह महाराजस्य मन्त्रिवराः समासीना बभूवुः । मङ्खकविस्तु सभागृहं प्राविशत्, यथोचितरीत्या च सविनयावनतमस्तकः समस्तान् समभिवादयन् पण्डितवरैरनुबध्यमानो निजज्यायसोऽर्धासन उपाविशत् । ततस्तत्र मङ्खकोऽधस्तादुल्लिखितान् पण्डित-पुङ्गवान् साक्षाच्चकार—

### नन्दनः ।

अयं तत्कालीनदार्शनिकेष्वग्रगण्यः कविताकाननकेसरी समाधिषु प्रायः परब्रह्मरसास्वादनप्रवरः तपोवरिष्ठो विपश्चिदपश्चिम आसीत्, अयं दर्शनविषयिकान् बहून ग्रन्थानरीरचत् ।

श्रीः

## श्रीरुय्यकः ।

असौ मङ्खमहाकवेर्गुरु र्नानाशास्त्र विवृति लेखनकुशलः । सौहार्दप्रश्रयरसस्रोतइवायं किलाऽलङ्कारसर्वस्वादिकान्बहून् साहित्य-ग्रन्थान् प्रणिनाय । स्वशिष्यस्य कृतिकौशलं निर्वर्ण्य राजानकरुय्यकः पण्डितपरिषदि मङ्खकं विशेषतया समभिनन्दयामास ।

## रम्यदेवः ।

सदा काषायवसनसंवीतोऽसौ वेदान्तदर्शनस्यानुपमो विद्वान् । अनेन कठशाखाविवृत्तिः, इष्टसिद्धि विवरणं चेति पुस्तकद्वयं रचितमासीत् ।

## लोष्टदेवः ।

अयं संस्कृतप्राकृतशौरसेनी मागधीप्राच्यपैशाचेतिषट्भाषा-भिज्ञः काव्यकलाकुशलोऽनेकप्रबन्धनिर्माताच । असौ तस्मिन्काले ऽलङ्कारपण्डितमेकादशपद्यैर्वर्णयामास ।

## श्रीगर्भः ।

असौ वृद्धोऽदभ्रगुणसंदर्भो वक्रोक्तिरचनाचातुरीचणः प्रभा-करगुहग्रन्थ व्याख्याता च पण्डितः ।

## मण्डनः ।

सौन्दर्यस्मेरमुखः श्रीगर्भस्यसुतोऽल्पवयस्क एव सन् चतु-र्दशविद्यानां पारदर्शी कविवरः ।

## श्रीकण्ठः ।

श्रीगर्भस्य पुत्रोऽसावपि मण्डनस्याऽनुजश्च । सर्वतोभद्रम-स्य पाण्डित्यम् ।

## गर्गः ।

सत्कविकुलतिलको वर्षीयान् विद्वान्, अस्य काव्येषुच्छेका-नुप्रासः स्वैरं नरीनर्तति ।

## श्रीदेवधरः ।

असौ भगवतो वैकुण्ठनाथस्याऽनन्य उपासकः । 'प्रदीप' नामकं बृहद्विवरणं 'मन्दिर' (वास्तु) शास्त्रस्याऽसौ रचितवान् । तस्मिन्-समयेऽसौ पद्यद्वयेन लङ्कमवर्णयत् ।

## नागः ।

व्याकरणपारावारपारीणः साहित्यविद्यासौविदल्लोऽनेकप्रबन्धप्रणेता युवा विद्वद्वरः ।

## श्रीत्रैलोक्यः ।

अयं भट्टश्रीकुमारिलस्य नव इवावतारस्तर्ककर्कशोऽपि सन् सरसकविकर्मणि प्रगल्भः सदाचारभूषितो बुधवरः ।

## "दामोदरः, षष्ठश्च" ।

"दामोदरः, षष्ठश्च"

एतावपि क्रमेण नैयायिकात्मदर्शननिष्णातृ-भूषणौ पण्डित-पुङ्गवौ ।

## जिन्दुकः ।

वाग्देवताकेलिकन्दुक इवायं भट्टप्रभाकरशास्त्रनदीष्णः काव्यरचनाचतुरश्च ।

## जल्हणः ।

अयं वक्रोक्तिवचनविचक्षणः कविवर-राजशेखरस्य पुनर्जन्मान्तरग्राहीव राजपुरी-नरेशस्य सोमपालस्य सान्धिविग्रहिकः । अनेन सोमपावविलासाख्यं काव्यं स्वरचिताऽलङ्कारानुसारिणीटीकोपेतं रचितमासीत् ।

## कल्याणः ।

असौ महाकविरलकदत्तकृतकाव्यानामनुशीलनशाली बिल्हणवत् प्रौढोक्तिकल्पनाकुशलो विविधकथाकोविद इतिहासधुरन्धरः पण्डितः । ( अयं कल्याणः कल्हण एवेति प्रतीयते ) ।

## श्रीगुन्नः ।

असौ केशकरप्रकमनीयः 'प्रभाकरकर्तृबृहती' शास्त्रस्य तस्मिन् कालेऽनन्यो विद्वान् बभूव ।

## जनकराजः ।

अयं महाभाष्यस्याख्यानप्रणेता यज्वनां वरेण्यो बुधवरः ।

## आनन्दः ।

अयं महाकवेः शम्भुभट्टस्य युगेऽनेकशास्त्रनिष्णातस्तत्कालीन-भिषजां मूर्धन्यभूतः ।

## श्रीसुहलः ।

असावपि शम्भुमहाकवेः सुतः श्रीमदानन्दस्याऽनुजन्माऽऽ-युर्वेदविद्याविशारदोऽगदंकारवरः ।

## 'सुहलो' द्वितीयः ।

अयं कान्यकुब्जभूपनेर्गोविचन्द्रस्य दूतस्तदानीं कश्मीरेषु समाजगाम, वैयाकरणेषु लब्धप्रतिष्ठोऽयमासीत् । अस्यानुयोगेन मंखक-स्तदानीमेव समस्यामेकामपूपुरत् ।

## श्रीतेजकण्ठः ।

असौ कुंकुणनरेशस्य श्रीमदपरादित्यस्य दूतस्तस्मिन्काले काश्मीरसभाया आसनमलञ्चकार । अनेनानेके वादिनो निर्जिता आ-सन् । मङ्खकेन सहाऽस्य चिरं संलापोऽभूत् । एतदनुरोधेन मङ्खको नैजं राजस्वतिनैपुण्यमपि प्राचीकटत् ।

एतदतिरिक्ताश्च तत्र 'श्रीगोविन्द भुड्डुश्रीवत्साऽनन्दपद्मराज-लक्ष्मीदेव योगराज-वागीश्वरपटुनामानोऽनेकशास्त्रपारदर्शिनः पण्डित-वरिष्ठाः समासीना अभूवन् ।

मङ्खकेन तत्कालीनपण्डितानां वर्णनानिवेशनेन निजकाव्ये स्वर्णे सौगन्ध्यमिव संपादितम् । श्रीकण्ठचरितं काव्यं किल भारतीय-

साहित्ये रत्नभूतमस्ति, येन तत्कालीनसाहित्यस्येतिहासविवेचने महत्साहाय्यं भवति।

आः क्व गतः स कालः ? यदा कश्मीरकाश्यप्यां नानाकविकुलतिलकानां पण्डितपुङ्गवानां च साहित्यपटहडिण्डिमः स्वैरं बोभवीति स्म ? अपि सा साहित्यच्छटा पुनरपि कश्मीरधरावलये विभासेत ? भवतु—

"पर्यन्ततः परम एव शिवः प्रमाणम्"

---

## सन्ध्या

( ले०—पं० गोविन्दराजानकः शास्त्री M. A. M. O. L , L. T., Prabhakar )

### मनुः

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः।
आचारमग्निकार्यं च सन्ध्योपासनमेव च ॥

हं हो ! धर्मपथावलम्बिनो मान्या भारतीया आर्याः। कलियुगेऽस्मिन् भारतीयाणामार्यवर्याणामधोगतिं विगणय्य भूयो भूयश्चेतः समुत्सुकायते तत्त्वजिज्ञासायै, नच शान्तिमेधत अन्तर्हृदयपटले। अपरिमितां नानाविधां भारतीयाणां वेदनां स्मारं स्मारं सर्वथाऽऽधिभौतिकीमाध्यात्मिकीं च दुर्बलतां निरीक्ष्य क्षते क्षारमिव प्रतिभाति। परमौषधं परमोपायभूतं परमेश्वरशरणात्मकं प्रातरेव सन्ध्यावन्दनमारोग्यसाधनं मनःसन्तोषवर्द्धकं दुःखदारिद्र्यवारकं परमैश्वर्यप्रदमन्तरा नान्योपायोऽस्ति भूतले विशेषतस्त्रैवर्णिकाणां हिन्दूनां भारतेऽस्मिन्। पाश्चात्यसंस्कृतिः परम्परया देशाचारानुगता तत्तद्देशीया तत्तज्जनपद्वासिनां हितकरा यत्र उपानत्परिशोधनं केशानुरञ्जनं तैलाद्यभिमर्दनादिकमेव सर्वं शारीरं कर्म प्रधानमुपलक्ष्यम्। न हि सर्वत्र सर्वदा सर्वथा एकैवाभिन्नैव संस्था निखिलापा-

यनिवारणसाधनभूता भवितुं शक्यते। तस्मादत्र भारते भगवच्छ-रणमन्तरा नान्यः पन्था, यन्मूलभूता हि सन्ध्या। सा च—

त्रयाणां चैव देवाणां ब्रह्मादीनां समागमः।
सन्धिः सर्वसुराणां च तेन सन्ध्या प्रकीर्तिता॥

तस्मात्—'सम्यग् ध्यानं सन्ध्या'। अहो रात्रेश्च संगमे मनसः शान्तिप्रदेऽनेहसि यथाविधि शुचौ देशे—

"अहरहः सन्ध्यामुपासीत" "उद्यन्तमस्तं च यान्तमादित्यम-भिध्यायन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते" अतः—

"विप्रो वृत्तः मूलकं तत्र सन्ध्या वेदः शाखा धर्मकर्माणि पत्रम्।
तस्मान्मूलं यत्नतो रक्षणीयं छिन्न मूले नैव पत्रं न शाखा॥" इति

सन्ध्या नाम चिच्छक्तिरूपा देवता तामुपासीत। स्वकीयां चिच्छक्तिं हि ध्यायन् य उपासते स एव-सर्वाणि दुर्गाणि तरति, आधि-व्याधिभ्यो मुक्तो भवति सर्वमायुर्भद्रमेवाश्नुते। यतः—

या सन्ध्या सा जगत्सूतिर्मायातीता हि निष्कला।
ईश्वरी केवला शक्तिस्तत्त्वत्रयसमन्विता।
ध्यात्वार्कमण्डलगतां सावित्रीं वै जपेद्बुधः॥
'सन्ध्या तूपासिता येन तेन विष्णुरुपासितः।
दीर्घमायुः स विन्देत सर्वपापैः प्रमुच्यते॥

इति योगियाज्ञवल्क्यः।

अतः—सन्ध्योपस्त्यादिकर्माणि वेदेना चोदितानि वै।
पूजां तैः कल्पयेत्सम्यक् संकल्पः कर्मपावनीम्॥ श्रीमद्भागवते।

तत्र व्यासः—प्रणवव्याहृतियुतां गायत्रीं शिरसा सह।
उच्चार्य दत्त्वार्घ्यमादौ सन्ध्याकर्म समाचरेत्॥

तत्रादौ प्राणायामः। तल्लक्षणं तु—श्वासप्रश्वासयोर्गतिवि-च्छेदः प्राणायामः, स च—

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥
प्राणायामास्त्रयः कार्या लक्षणैश्च त्रिभिर्युताः।
ग्राहो मन्दो विसर्गश्च लक्षणत्रयमुच्यते।
आधानं रोधमुत्सर्गं ध्यायेदेताननुक्रमात्।

एवं गायत्रीं पठन् पूरककुम्भकरेचकेषु ब्रह्मविष्णुशिवान् ध्यायन् प्राणायामं कुर्यात्। तथाच—

ब्रह्माणं केशवं शम्भुं ध्यायेदेताननुक्रमात्।
एकावर्तः पूरकः स्यात् कुम्भको द्विगुणस्तथा।
रेचकस्त्रिगुणः प्रोक्तः प्राणायामः स उच्यते ॥

तत्र नियमस्तु—

बद्धासनं नियम्यासून् स्मृत्वा ऋष्यादिकं तथा।
संनिमीलितदृङ् मौनी प्राणायामं समाचरेत् ॥
रेचको विसृजेद्वायुं पूरकस्तन्निरोधकः।
समेन संस्थितो यस्तु कुम्भकः समुदीर्यते ॥
ऊर्ध्वं नासिकयाकृष्टः श्वासः पूरक उच्यते।
कुम्भको निश्चलश्वासो रेच्यमानस्तु रेचकः ॥

तत्फलं तु वसिष्ठः—

निरोधाज्जायते वायुर्वायोरग्निः प्रजायते।
अग्नेरापो व्यजायन्त तैरन्तः शुध्यते त्रिभिः ॥

योगियाज्ञवल्क्यस्तु—

भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च।
सप्त चोंकारसंयुक्तास्तथा तत्सवितुः पदम् ॥
आपो ज्योतिरित्येतच्छिरः पश्चात् प्रयोजयेत्।
त्रिरावर्तनयोगात्तु प्राणायामः स शब्दितः ॥

